ण्यस्य निवृत्तिरिति 'तस्य धेनुरिति गवाम्' [जै० १० । ३ । १४ । ५ । ६] इति दाशमिकाधिकरणे स्थितं तथाऽपि दक्षिणाशब्दोऽयं भृतिवचनः स च कर्मापेक्षयाऽपि प्रवर्ततेऽस्मिन्कर्मणीयं भृतिरिति, कर्त्रपेक्षयाऽपि प्रवर्ततेऽस्मिन्कर्मण्यस्य पुरुषस्येयं भृतिरिति । ततश्च ऋत्विग्बहुत्वापेक्षया दक्षिणाबहुत्वसंभवाद्दक्षिणास्विति बहुवचनमुपपद्यते । अत एव क्रतपेये—"औदुम्बरः सोमचमसो दक्षिणा" "स प्रियाय सगोत्राय ब्रह्मणे देयः" इत्यत्रैकवाक्यतापक्षे ब्रह्मभागमात्रेऽपि दक्षिणाशब्दस्यावयवलक्षणामन्तरेण मुख्यत्वोपपत्तेस्तन्मात्रबाध इत्युक्तं दशमे यदि ब्रह्मणस्तद्धनं तद्विकारः स्यादित्यधिकरणे । ततश्च क्रत्वपेक्षया दक्षिणैक्येऽपि ऋत्विगपेक्षया दक्षिणाभेदसंभवाद्दक्षिणास्विति बहुवचनस्य नानुपपत्तिरिति द्रष्टव्यम् ॥ २ ॥

अश्रद्धाप्रकारमेव दर्शयति—

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । अनन्दा
नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥

पीतमुदकं याभिस्ताः पीतोदकाः । जग्धं भक्षितं तृणं याभिस्ता जग्धतृणाः । दुग्धो दोहः क्षीराख्यो याभिस्ता दुग्धदोहाः । निरिन्द्रिया अप्रजननसमर्था जीर्णा निष्फला इति यावत् । या एवंभूता गावस्ता ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्प्रयच्छन् । अनन्दा असुखास्ते शास्त्रप्रसिद्धा लोकाः सन्ति नाम खलु । तत्र स यजमानो गच्छत्येवममन्यतेत्यर्थः ॥ ३ ॥

स होवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं तृतीयम् ।

दीयमानदक्षिणावैगुण्यं मन्यमानो नचिकेताः स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छन्नास्तिकाग्रेसरः पितरमुपगम्योवाच तात कस्मा ऋत्विजे दक्षिणार्थं मां दास्यसीति । स एवमुक्तेनापि पित्रोपेक्ष्यमाणोऽपि द्वितीयं तृतीयमपि पर्यायं कस्मै मां दास्यसीत्युवाच ।

तꣳ होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥

एवं निर्विद्यमानः पिता कुपितस्तं पुत्रं मृत्यवे त्वा ददामीत्युक्तवान् ॥ ४ ॥

एवमुक्तोऽपि पुत्रो विगतसाध्वसशोकः पितरमुवाच—

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।

सर्वेषां मृत्युसदनगन्तॄणां पुरतो मध्ये वा गच्छामि न तु मन्थरः पश्चात् । मृत्युसदनगमने न कोऽपि मम विचार इति भावः ।

किं तर्हि तत्राऽऽह—

किꣳ स्विद्यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति॥५॥

मृत्युर्मयाऽद्य यत्करिष्यति तत्तादृशं यमस्य कर्तव्यं किं वा पूर्णकामस्य मृत्योर्मादृशेन बालिशेन किं प्रयोजनं स्याद्येन ऋत्विग्भ्य इव तस्मै मदर्पणं सफलं स्यात् । अत एतदेवानुशोचामीति भावः ॥ ५ ॥

साध्वसरोषावेशहीनमीदृशं पुत्रवाक्यं श्रुत्वा क्रोधावेशान्मया मृत्यवे त्वा ददामीत्युक्तं नेदृशं पुत्रं मृत्यवे दातुमुत्सह इति पश्चात्तप्तहृदयं पितरमालोक्योवाच—

अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।

पूर्वे पितामहादयो यथा मृषावादं विनैव स्थिता यथा चापरे साधवोऽद्यापि तिष्ठन्ति तान्वीक्ष्य तथा वर्तितव्यमिति भावः ।

सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥ ६ ॥

मर्त्यः सस्यमिवाल्पेनापि कालेन जीर्यति जीर्णश्च मृत्वा सस्यमिव पुनराजायते । एवमनित्ये जीवलोके किं मृषाकरणेन । पालय सत्यं प्रेषय मां मृत्यव इति भावः ॥ ६ ॥

एवमुक्त्वा प्रेषितः प्रोषितस्य मृत्योर्द्वारि तिस्रो रात्रीरनश्नन्नुवास । ततः प्रोष्याऽऽगतं यमं द्वाःस्था वृद्धा ऊचुः ।

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।

तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥

साक्षादग्निरेवातिथिर्ब्राह्मणः सन्गृहान्प्रविशति तस्याग्नेरेतां पाद्यासनादिलक्षणां शान्तिं कुर्वन्ति सन्तस्तदुपचारेण दग्धा मा भूमेति । अतो हे वैवस्वत नचिकेतसे पाद्यार्थमुदकं हराऽऽहरेत्यर्थः ॥ ७ ॥

अकरणे प्रत्यवायं च दर्शयन्ति स्म—

आशाप्रतीक्षे संगतꣳ सूनृतां चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् ।

एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे॥८॥

यस्याल्पमेधसोऽल्पप्रज्ञस्य पुरुषस्य गृहेऽनश्नन्नभुञ्जानोऽतिथिर्वसति तस्याऽऽशाप्रतीक्षे कामसंकल्पौ । यद्वाऽनुत्पन्नवस्तुविषयेच्छाऽऽशा । उत्पन्नवस्तुप्राप्तीच्छा प्रतीक्षा । संगतं सत्संगमं सूनृतां सत्यप्रियवाचम् । इष्टापूर्ते इष्टं यागादि पूर्तं खातादि पुत्रान्पशूंश्चैतदनशनरूपं पापं वृङ्क्ते वर्जयति नाशयतीत्यर्थः । वृजी वर्जने रुधादित्वाच्छ्नम् । वृजि वर्जन इत्यस्मादिदितो नुमदादित्वाच्छपो लुग्वा ॥ ८ ॥

एवं वृद्धैरुक्तो मृत्युर्नचिकेतसमुवाच–

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।

मे गृहे यस्माद्धेतोर्हे ब्रह्मन्नमस्कारार्होऽतिथिस्त्वं तिस्रो रात्रीरभुञ्जान एवावात्सीरित्यर्थः ।

नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु ।

स्पष्टोऽर्थः ।

तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥

तस्माद्धेतोर्मह्यं स्वस्ति यथा स्यादित्येवमर्थं त्रीन्वरान्प्रति तानुद्दिश्य वृणीष्व प्रार्थय । तव लिप्साभावेऽपि मदनुग्रहार्थमनशनरात्रिसमसंख्याकांस्त्रीन्वरान्वृणीष्वेति भावः ॥ ९ ॥

एवं प्रार्थितो नचिकेतास्त्वाह—

शान्तसंकल्पः सुमना यथा स्याद्वी-

तमन्युर्गौतमो माऽभि मृत्यो ।

हे मृत्यो मत्पुत्रो यमं प्राप्य किं करिष्यतीति मद्विषयचिन्तारहितः प्रसन्नमना माऽभि मां प्रति मम पिता गौतमो वीतरोषश्च यथा स्यादित्यर्थः । किं च—

त्वत्प्रसृष्टं माऽभिवदेत्प्रतीतः ।

त्वया गृहाय प्रेषितं माऽभि मां प्रति प्रतीतो यथापूर्वं प्रीतः सन्वदेत यद्वाऽभिवदेदाशिषं प्रयुञ्ज्यात् । अभिवदति नाभिवादयत इति स्मृतेऽष्वभिवदनस्याऽऽशीर्वादे प्रयोगात् ।

एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

एवमुक्तो मृत्युः प्रत्युवाच—

यथा पुरस्ताद्भविता प्रतीतः ।

यथापूर्वं त्वयि हृष्टो भविता ।

औद्दालकिरारुणिर्मत्प्रसृष्टः ।

उद्दालक एवौद्दालकिः । अरुणस्यापत्यमारुणिर्द्व्यामुष्यायणो वा । उद्दालकस्यापत्यमरुणस्य गोत्रापत्यमिति वाऽर्थः । मत्प्रसृष्टो मदनुज्ञातो मदनुगृहीतः सन्मदनुग्रहादित्यर्थः ।

सुखꣳ रात्रीः शयिता वीतमन्युः ।

त्वयि विगतमन्युः सन्नुत्तरा अपि रात्रीः सुखं शयिता । लुट्, सुखनिद्रां प्राप्स्यतीति यावत् ।

त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥

ददृशिवान्दृष्टवान्सन्नित्यर्थः । क्वसन्तोऽयं शब्दो दृशेश्चेति वक्तव्यमिति क्वसोरिट्छान्दसो द्विर्वचनाभावः । मत्प्रसृष्टमिति द्वितीयान्तपाठे मत्प्रेषितं त्वामिति योजना ॥ ११ ॥

नचिकेता द्वितीयं वरं प्रार्थयते स्वर्गे लोक इत्यादिना मन्त्रद्वयेन—

स्वर्गे लोके न भयं किंचनास्ति ।

अत्र स्वर्गशब्दो मोक्षस्थानपरे यथा चैतत्तथोत्तरत्र वक्ष्यते ।

न तत्र त्वं न जरया बिभेति ।

हे मृत्यो त्वं तत्र न प्रभवसि जरया युक्तः सन्न बिभेति जरातो न बिभेति । तत्र वर्तमानः पुरुष इति शेषः ।

उभे तीर्त्वाऽशनायापिपासे शोका-

तिगो मोदते स्वर्गलोके ॥ १२ ॥

अशनाया बुभुक्षा । अत्रापि स्वर्गशब्दो मोक्षस्थानपरो यथा चैतत्तथोत्तरत्र वक्ष्यते ॥ १२ ॥

स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो ।

स त्वमिति । पुराणादिप्रसिद्धसर्वज्ञस्त्वं स्वर्गप्रयोजनकमग्निं जानासि ।

स्वर्गादिभ्यो यद्वक्तव्य इति प्रयोजनमित्यर्थे यत्। स्थण्डिलरूपाग्नेः स्वर्ग-प्रयोजनकत्वं चोपासनाद्वारेत्युत्तरत्र स्फुटम्।

प्रब्रूहि त९ श्रद्दधानाय मह्यम् ।

श्रद्दधानाय मोक्षश्रद्धावते।

स्वर्गलोकेन तव किं सिध्यतीत्यत्राऽऽह—

स्वर्गलोका अमृतत्वं भजन्त एत-
द्द्वितीयेन वृणे वरेण ॥ १३ ॥

स्वर्गो लोको येषां ते परं पदं प्राप्ता इत्यर्थः। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" [छा०८।३।४] इति देशविशेषविशिष्टब्रह्मप्राप्तिपूर्व-कत्वात्स्वरूपाविर्भावलक्षणमोक्षशब्दितामृतत्वस्येति भावः ॥ १३ ॥

एवमुक्तो मृत्युः प्राह—

प्र ते ब्रवीमि तदु मे निबोध ॥

त्वत्प्रार्थितं ते प्रब्रवीमि। व्यवहिताश्चेति व्यवहितः प्रयोगः। मे ममो-पदेशाज्जानीहीत्यर्थः।

ज्ञानस्य फलं दर्शयति—

स्वर्ग्यमग्निं नचिकेतः प्रजानन्। अनन्तलोकाप्तिमथो
प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥ १४ ॥

अनन्तस्य विष्णोर्लोकस्तत्प्राप्तिम्। "तद्विष्णोः परमं पदम्" [क० १। ३।९] इत्युत्तरत्र वक्ष्यमाणत्वात्। अथो तत्प्राप्त्यनन्तरं प्रतिष्ठामपुनरा-वृत्तिं च लभत इति शेषः। तज्ज्ञानस्येदृशं सामर्थ्यं कथं संभवतीति मन्यमानं प्रत्याह—विद्धि त्वमेतं निहितं गुहायाम्। ब्रह्मोपासनाङ्गतये-तज्ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूपं गुहायां निहितमन्ये न जानन्ति त्वं जानीहीति भावः। यद्वा ज्ञानार्थस्य विदेर्लाभार्थकत्वसंभवादग्निं प्रजानंस्त्वमनन्तलोकाप्तिं प्रतिष्ठां लभस्वेत्युक्ते हेतुहेतुमद्भावः सिद्धो भवति। प्रजानन्, लक्षणहेत्वोरिति शतृप्रत्ययः ॥ १४ ॥

अनन्तरं श्रुतिवाक्यम्—

लोकादिमग्निं तमुवाच तस्मै ।

लोकस्याऽऽदिं हेतुं स्वर्ग्यमिति यावत्। तमग्निमुवाच।

या इष्टका यावतीर्वा यथा वा ।

यल्लक्षणा इष्टकाश्चेतव्या यत्संख्याका येन प्रकारेण चेतव्यास्तत्सर्वमुक्तवानित्यर्थः । यावतीरिति पूर्वसवर्णश्छान्दसः ।

स चापि तत्प्रत्यवदद्यथोक्तम् ।

स च नचिकेतास्तच्छ्रुतं सर्वं तथैवानूदितवानित्यर्थः ।

अथास्य मृत्युः पुनराह तुष्टः ॥ १५ ॥

शिष्यस्य ग्रहणसामर्थ्यदर्शनेन संतुष्टः सन्मृत्युः पुनरप्युक्तवान् ॥१५॥

तमब्रवीत्प्रीयमाणो महात्मा ।

संतुष्यन्महामना मृत्युर्नचिकेतसमब्रवीत् ।

वरं तवेहाद्य ददामि भूयः ।

**पुनश्चतुर्थं वरं प्रयच्छामीति ।**
किं तत्राऽऽह—

तवैव नाम्ना भविताऽयमग्निः ।

मयोच्यमानोऽग्निस्तवैव नाम्ना नाचिकेत इति प्रसिद्धो भविता ।
किंच—

सृङ्कां चेमामनेकरूपां गृहाण ॥ १६ ॥

विचित्रां सृङ्कां शब्दवतीं रत्नमालां स्वी कुर्वित्यर्थः ॥ १६ ॥
पुनरपि कर्म स्तौति—

त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू ।

त्रिणाचिकेतः "अयं वाव यः पवते" इत्याद्यनुवाकत्रयाध्यायी त्रिकर्मकृद्यजनाध्ययनदानकृत्पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा त्रिभिरग्निभिस्त्रिभिरनुष्ठितैरग्निभिः संधिं परमात्मोपासनेन संबन्धमेत्य प्राप्य जन्ममृत्यू तरतीत्यर्थः । "करोति तद्येन पुनर्न जायते" इत्यनेनैकार्थ्यात् । एवमेव ह्ययं मन्त्रः "त्रयाणामेव चैवम्" [ ब्र० सू० १ । ४ । ६ ] इति सूत्रे व्यासार्यैर्विवृतः ।

त्रिभिरेत्य संधिमिति निर्दिष्टमङ्गभूतं परमात्मोपासनमाह—

ब्रह्मजज्ञं देवमीड्यं विदित्वा ।

अयं मन्त्रखण्डः "विशेषणाच्च" [ ब्र०सू० १ । २ । १२ ] इति सूत्रभाष्ये ब्रह्मजज्ञो जीवो ब्रह्मणो जातत्वाज्ज्ञत्वाच्च तं देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थ इति विवृतः । देवशब्दस्य परमात्मवाचितया जीवपरयोश्चैक्यासंभवादत्रत्यदेवशब्दस्य परमात्मकत्वपर्यन्तार्थ इति भाष्याभिप्रायः ।

निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १७ ॥

निचाय्य ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्येमां त्रिकर्मकृत्तरतीति पूर्वमन्त्रनिर्दिष्टां संसाररूपानर्थशान्तिमेतीत्यर्थः ॥ १७ ॥

त्रिणाचिकेतस्त्रयमेतद्विदित्वा ।

त्रिणाचिकेत उक्तार्थः । त्रयमेतद्विदित्वा ब्रह्मजज्ञं देवमीड्यमिति मन्त्रनिर्दिष्टं ब्रह्मस्वरूपं तदात्मकस्वात्मस्वरूपं त्रिभिरेत्य संधिमिति निर्दिष्टमग्निस्वरूपं च विदित्वा, गुरूपदेशेन, शास्त्रतो वा ज्ञात्वा ।

य एवं विद्वाꣳश्चिनुते नाचिकेतम् ।

एतादृशार्थत्रयानुसंधानपूर्वकं नाचिकेतमग्निं यश्चिनुते ।

स मृत्युपाशान्पुरतः प्रणोद्य ।

स मृत्युपाशान्रागद्वेषादिलक्षणान्पुरतः शरीरपातात्पूर्वमेव प्रणोद्य तिरस्कृत्य जीवद्दशायामेव रागादिरहितः सन्नित्यर्थः ।

शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥

पूर्वमेव व्याख्यातम् ॥ १८ ॥

यो वाऽप्येतां ब्रह्मजज्ञात्मभूतां
चितिं विदित्वा चिनुते नाचिकेतम् ॥
स एव भूत्वा ब्रह्मजज्ञात्मभूतः
करोति तयेन पुनर्न जायते ॥ १९ ॥

य एतां चितिं ब्रह्मजज्ञात्मभूतां विदित्वा ब्रह्मात्मकस्वस्वरूपतयाऽनुसंधाय नाचिकेतमग्निं चिनुते स एव ब्रह्मात्मकस्वात्मानुसंधानशाली सन्नपुनर्भवहेतुभूतं यद्भगवदुपासनं तदनुतिष्ठति । ततश्चाग्नौ भगवदात्म-

कस्वात्मत्वानुसंधानपूर्वकमेव चयनं "त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू" इति पूर्वमन्त्रे भगवदुपासनद्वारा मोक्षसाधनतया निर्दिष्टं नान्यदितिभावः। अयं च मन्त्रः केषुचित्कोषेषु न दृष्टः कैश्चिद्व्याकृतश्च। अथापि प्रत्ययितव्यतमैर्व्यासादिभिरेव व्याख्यातत्वान्न प्रक्षेपशङ्का कार्या ॥ १९ ॥

एष तेऽग्निर्नचिकेतः स्वर्ग्यः ।

उपदिष्ट इति शेषः।

यमवृणीथा द्वितीयेन वरेण ।

स्पष्टोऽर्थः। किंच—

एतमग्निं तवैव प्रवक्ष्यन्ति जनासः ।

जनास्तवैव नाम्नैतमग्निं प्रवक्ष्यन्तीत्यर्थः।

तृतीयं वरं नचिकेतो वृणीष्व ॥ २० ॥

स्पष्टोऽर्थः। न चैतत्प्रकरणगतानां स्वर्गशब्दानां मोक्षपरत्वे किं प्रमाणमिति चेदुच्यते। भगवतैव भाष्यकृता स्वर्ग्यमग्निमिति मन्त्रे प्रस्तुत्य स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते। "स्वर्गलोका अमृतत्वं भजन्ते" इति तत्रस्थस्य जननमरणाभावश्रवणात्। "त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू" इति च वचनात्। तृतीयवरप्रश्ने नचिकेतसा क्षयिफलानां निर्दिश्यमानतया क्षयिफलमुखेन नचिकेतसा क्षयिष्णुस्वर्गफलसाधनस्य प्रार्थ्यमानत्वानुपपत्तेः। स्वर्गशब्दस्य प्रकृष्टसुखवचनतया निरवधिकानन्दरूपमोक्षस्य स्वर्गशब्दवाच्यत्वसंभवादिति करणतस्तात्पर्यतश्च प्रतिपादितत्वान्न शङ्कावकाशः। ननु "स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं जरया बिभेति। उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके"। "स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳ श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण" इति द्वितीयवरप्रश्नमन्त्रद्वये चतुरभ्यस्तस्य स्वर्गशब्दस्य मोक्षपरत्वं किं मुख्यया वृत्त्योतामुख्यया। नाऽऽद्यः। स्वर्गापवर्गमार्गाभ्यां 'स्वर्गापवर्गयोरेकं न स्वर्गं नापुनर्भवं' 'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इत्यादिप्रयोगेष्वपवर्गप्रतिद्वंद्विवाचितया लोकवेदप्रसिद्धस्य स्वर्गशब्दस्य मोक्षवाचित्वाभावात्।

ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश ।
स्वर्लोकः सोऽत्र कथितो लोकसंस्थानचिन्तकैः ॥

इति पुराणवचनानुसारेण सूर्यध्रुवान्तर्वर्तिलोकविशेषस्यैव स्वर्गशब्द-वाच्यतया तत्रैव लौकिकवैदिकव्यवहारदर्शनेन मोक्षस्थानस्यातथात्वात् । नाप्यमुख्ययेति द्वितीयः पक्षः । मुख्यार्थे बाधकाभावात् । किमत्र प्रश्न-वाक्यगतं जरामरणराहित्यामृतत्वभाक्त्वादिकं बाधकमुत प्रतिवचनगत-जरामृत्युतरणाद्युत क्षयिस्वर्गस्य सर्वकामविमुखनचिकेतःप्रार्थ्यमानत्वानु-पपत्तिर्वा । नाऽऽद्यः । स्वर्गलोकवासिनां जरामरणक्षुत्पिपासाशोकादि-राहित्यस्यामृतपानादमृतत्वप्राप्तेश्च पुराणेषु स्वर्गस्वरूपकथनप्रकरणेषु दर्शनात् । 'आभूतसंप्लवस्थानममृतत्वं हि भाष्यते' इति स्मरणात् । अत्रैव "अजीर्यताममृतानामुपेत्य" इति मृत्यावप्यमृतशब्दप्रयोगदर्श-नाच्च । स्वर्गलोकवासिनामेव ब्रह्मोपासनद्वारा "ते ब्रह्मलोके तु परान्त-काले" [मु० ३।२।६] इति श्रुत्युक्तरीत्याऽमृतत्वप्राप्तेः संभवेन "स्वर्ग-लोका अमृतत्वं भजन्ते" इत्यस्योपपत्तेश्चापेक्षितामृतत्वपरतया लोकवेद-निरूढोपसंहारिकामृतशब्दानुसारेण प्रक्रमस्थानन्यथासिद्धविशेष्यवा-चिस्वर्गशब्दस्यान्यथानयनासंभवात् । न हि देवदत्तोऽभिरूप इत्युक्तेऽ-भिरूपपदस्वारस्यानुसारेण देवदत्तपदस्यात्यन्ताभिरूपयज्ञदत्तपरत्वमा-श्रीयते । न द्वितीयः । त्रिणाचिकेतस्त्रिभिरिति मन्त्रस्य स्वर्गसाधन-स्यैवाग्नेस्त्रिरभ्यासेन जन्ममृत्युतरणहेतुभूतब्रह्मविद्याहेतुत्वमस्तीत्येतदर्थ-कतया स्वर्गशब्दस्य मुख्यार्थपरत्वाबाधकत्वात् । अत एव तत्तुल्यार्थस्य "करोति तद्येन पुनर्न जायते" इत्यस्यापि न स्वर्गशब्दमुख्यार्थबाधकत्वं नापि क्षयिष्णोः स्वर्गस्य फलान्तरविमुखनचिकेतःप्रार्थ्यमानत्वानुपप-त्तिरिति तृतीयः पक्षः । स्वर्गसाधनाग्निप्रश्नं प्रति ब्रुवता हितैषिणा मृत्युनाऽपृष्टेऽपि मोक्षस्वरूपे "अनन्तलोकाप्तिमथो प्रतिष्ठां त्रिणाचिके-तस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू" इत्यादिनोपक्षिप्त उत्पन्ना मुमुक्षा "अन्यं वरं नचिकेतो वृणीष्व" इति प्रतिषेधेन दृढीकृता । तस्यां च दशायां क्रियमाणक्षयिष्णुफलनिन्दा प्राचीनस्वर्गप्रार्थनायाः कथं बाधिका स्यात् । किंच "श्वोभावा मर्त्यस्य" [क० १।१।२६] इत्यादौ मर्त्यभोगनिन्दाया एव दर्शनेन स्वर्गनिन्दाया अदर्शनात्स्व-र्गशब्दस्य मोक्षपरत्वे तस्य ज्ञानैकसाध्यतया तत्प्रयोजनकत्वस्याग्नाव-भावादुपक्रमोपसंहारमध्याभ्यस्तस्वर्गशब्दपीडाप्रसङ्गाच्च । सन्तु वा प्रति-

वचने बाधकान्यथाप्युपक्रमाधिकरणन्यायेन प्रथमस्य प्रश्नवाक्यस्थस्वर्गशब्दस्यैव प्रबलत्वात्। न वा 'भूयसां स्यात्सधर्मत्वम्' [जै० १२।२।७।२२] इति न्यायाद्भूयोनुग्रहार्थेऽल्पस्योपक्रमस्य बाध्यत्वमस्त्विति वाच्यम् । 'मुख्यं वा' [जै० १२।२।८।२३] इति सूत्र औपसंहारिकबह्वपेक्षयाऽपि मुख्यस्यैव प्राबल्योक्तेः । तस्मात्स्वर्गशब्दस्य मुख्यार्थपरित्यागे न किंचित्कारणमिति। अत्रोच्यते—स्वर्गशब्दस्य मुख्ययैव वृत्त्या मोक्षवाचित्वं स्वर्गकामाधिकरणे नागृहीतविशेषणन्यायेन स्वर्गशब्दस्य प्रीतिवचनत्वमेव न प्रीतिविशिष्टद्रव्यवाचितेत्युक्तम् । ननु स्वर्गशब्दस्य नागृहीतविशेषणन्यायेन प्रीतिवचनत्वे सिद्धेऽपि देहान्तरदेशान्तरभोग्यप्रीतिवाचिता न सिध्येत् । न च यस्मिन्नोष्णमित्यादिवाक्यशेषाद्विध्युद्देशस्थस्वर्गशब्दस्य प्रीतिविशेषवाचितानिश्चय इति वाच्यम् । प्रीतिमात्रवाचित्वेन निर्णीतशक्तिकतया संदेहाभावेन 'संदिग्धेषु वाक्यशेषात्' [जै० १।४।१९।२९] इति न्यायस्यानवतारादिति परिचोद्य यद्यपि लोक एव स्वर्गशब्दस्य निर्णीतार्थता तथाऽपि लोकावगतसातिशयसुखवाचकत्वे तत्साधनत्वं ज्योतिष्टोमादीनां स्यात् । तथा चाल्पधननरायाससाध्ये लौकिके तदुपायान्तरे संभवति न बहुधननराणां सुसाध्ये बह्वन्तराये ज्योतिष्टोमादौ प्रेक्षावान्प्रवर्तत इति प्रवर्तकत्वं ज्योतिष्टोमादिविधेर्न स्यात् । अतो वाक्यशेषावगते निरतिशयप्रीतिविशेषे स्वर्गशब्दस्य शक्तौ निश्चितायां वाक्यशेषाभावस्थलेऽपि यववराहादिष्विव स एवार्थः । लौकिके सातिशयप्रीतिभरिते गुणयोगादेव वृत्तेरुपपत्तेर्न शक्त्यन्तरकल्पना। न च प्रीतिमात्रवचनस्यैव स्वर्गशब्दस्य वेदे निरतिशयप्रीतिवाचित्वमस्त्विति वाच्यम् । निरतिशयत्वांशस्यान्यतोऽनवगतत्वेन तत्रापि शक्त्यवश्यंभावेन स्वर्गशब्दस्य लोकवेदयोरनेकार्थता स्यात् । यदा तु वैदिकप्रयोगावगतनिरतिशयप्रीतिवाचिता, तदा सातिशये लौकिके प्रीतित्वसामान्ययोगाद्गौणी वृत्तिरिति, मीमांसकैर्निरतिशयसुखवाचित्वस्यैव समर्थिततया मोक्षस्य स्वर्गशब्दवाच्यत्वे विवादायोगात् । पार्थशब्दस्यार्जुन इव तदितरपृथापुत्रेषु प्रचुरप्रयोगाभावेऽपि पार्थशब्दमुख्यार्थत्वानपायवत्स्वर्गशब्दस्य सूर्यध्रुवान्तरवर्तिलोकगतसुखविशेष इवान्यत्र प्रचुरप्रयोगाभावोऽपि वाच्यतानपायात् । बर्हिराज्यादिशब्दानामसंस्कृततृणघृतादिष्वार्यैरप्रयुज्यमानानामप्यस्त्येव तद्वाचित्वं केषांचिदप्रयोगमात्रस्य शक्त्यभावासाधकत्वात् । अतस्तृण-

त्वादिजातिवचना एव बर्हिरादिशब्दा इति बर्हिराज्याधिकरणे स्थित-त्वात्। तदुक्तं वार्तिके—

एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः।
तद्त्यागान्न तस्यास्ति निमित्तान्तरगामिता ॥ इति ।

ततश्च स्वर्गशब्दो मोक्षसाधारण एव। ननु बर्हिराज्यादिशब्देष्वसंस्कृततृ-णघृतादावार्यप्रयोगाभावेऽप्यनार्यप्रयोगसत्त्वादसंस्कृतवाचिताऽस्तु नाम। स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकसुखविशेषातिरिक्तस्थले नियमेनाप्र-योगात्तद्व्यावृत्त्यैव शक्तिरभ्युपगन्तव्या। अत एव प्रोद्गात्रधिकरण उद्गा-तृशब्दस्य ऋत्विग्विशेष इतरव्यावृत्तप्रयोगविशेषेण रूढत्वात्तस्य चोद्गातु-रेकत्वेन 'प्रैतु होतुश्चमसः प्रोद्गातॄणाम्' इति बहुवचनार्थबहुत्वासंभवात्तद-न्वयार्थं रूढिपूर्वकलक्षणया 'अत्र सुब्रह्मण्यनामकस्तोत्रसंबधिनां त्रयाणां वा सुब्रह्मण्यानां चतुर्णां वोद्गात्रादीनां छन्दोगानां ग्रहणमित्येतद्विरु-ध्येत। तथाऽहीनाधिकरणे तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये-त्यत्राहीनशब्दस्याह्नः खः क्रताविति व्याकरणस्मृत्या खप्रत्ययान्तत-याऽहर्गणसामान्यवाचितया व्युत्पादितस्याप्यहीनशब्दस्य नियमेन सत्रेऽ-प्रयोगादहर्गणविशेषरूढिमङ्गीकृत्य ज्योतिष्टोमस्याहर्गणविशेषत्वाभावा-दहीन इति योगस्य रूढिपराहतत्वेन योगेन ज्योतिष्टोमे वृत्त्यसंभ-वाज्ज्योतिष्टोमप्रकरणाधीताया अपि द्वादशाहीनस्येति द्वादशोपसत्ताया अहर्गणविशेषोत्कर्ष इत्युक्तम्। तथा पाय्यसान्नाय्यनिकाय्यधाय्या मानह-विर्निवाससामिधेनीष्विति व्याकरणस्मृत्या सामिधेनीमात्रवाचितया व्यु-त्पादितस्यापि धाय्याशब्दस्य न सामिधेनीवचनत्वं नापि धीयमानत्व-रूपयोगार्थवशेन वा धीयमानमात्रवचनत्वम्। स्तुतिशस्त्रार्थतया धीय-मानासु ऋक्षु सामिधेनीमात्रे च धाय्याशब्दप्रयोगादपि तु 'पृथुवाजवत्यौ धाय्ये भवतः' इत्यादिवैदिकप्रयोगविषयेषु पृथुवाजवत्यादिष्वेव धाय्या-शब्दस्य शक्तिरिति 'समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युः' [ जै०५।३।३।४ ] इति पाञ्चमिकाधिकरणे स्थितमेवमादिकं सर्वं विरुध्येत। स्वर्गशब्दे त्वदुक्तरीत्या प्रयोगाभावेऽपि शक्तिसंभव उद्गा-त्रादिशब्दानामृत्विग्विशेषादिषु रूढेरकल्पनीयत्वादिति चेत्। सत्यम्। यदि सर्वात्मना तदतिरिक्ते स्वर्गशब्दप्रयोगो न स्यात्तदा तद्व्यावृत्ता रूढिरभ्युपगन्तव्या स्यात्। अस्ति हि तत्रापि प्रयोगः। "तस्य हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽऽवृतः, यो वैतां ब्रह्मणो वेद"" तेन धीरा

अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः" [बृ० ४।४।८]। "अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति [ के० ३४ ]। इति तैत्तिरीयकबृहदारण्यकतलवकारादिष्वध्यात्मशास्त्रेषु प्रयोगदर्शनात्, पौराणिकपरिकल्पितस्वर्गशब्दरूढेः, सांख्यपरिकल्पिताव्यक्तशब्दरूढिवदनादरणीयत्वात्, अस्मिन्नेव प्रकरणे "त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम्। स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके" [ क०१।१।१८ ]। इति मन्त्रे कर्मज्ञानसमुच्चयसाध्यवाचकतया श्रूयमाणस्य स्वर्गलोकशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकव्यतिरिक्तवैराजपदवाचकतया परैरपि व्याख्यातत्वाच्च। ननु सूर्यलोकोर्ध्ववर्तिलोकत्वस्यैव प्रवृत्तिनिमित्ततया तस्य च वैराजपदेऽपि सत्त्वान्नामुख्यार्थत्वमिति चेत्तर्हि भगवल्लोकेऽप्यूर्ध्ववर्तित्वाविशेषेण मुख्यार्थत्वानपायात्। स्वर्गापवर्गमार्गाभ्यामित्यादिव्यवहारस्य ब्राह्मणपरिव्राजकन्यायेनोपपत्तेश्च। अस्तु वाऽमुख्यार्थत्वं मुख्यार्थे बाधकसत्त्वात्। किमत्र बाधकमितिचेच्छ्रूयतामवधानेन। 'स्वर्गे लोके न भयं किंचनास्ति' इति प्रथमे प्रश्नमन्त्रे न भयं किंचनास्तीत्यपहतपाप्मत्वं प्रतिपाद्यते। स्वर्गेऽपि पातभीतस्येत्युक्तरीत्या केन पापेन कदा पतिष्यामीति भीत्यभावः प्रतिपाद्यते स ह्यपहतपाप्मन एव संभवति। 'न तत्र त्वं जरया बिभेति' इत्यनेन विजरत्वविमृत्युत्वे प्रतिपाद्येते। "उभे तीर्त्वाऽशनायापिपासे" इत्यनेन विजिघत्सत्वापिपासत्वे प्रतिपाद्येते। 'शोकातिगः' इति विशोकत्वम्। 'मोदते स्वर्गलोके' इत्यनेन स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति। "तेन पितृलोकेन संपन्नो महीयते" [ छा० ८।२।१ ] इति श्रुतिसंदर्भप्रतिपाद्ये सत्यकामत्वसत्यसंकल्पत्वे प्रतिपाद्येते। ततश्चाध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्रह्मगुणाष्टकाविर्भावस्येह प्रतीयमानतया तस्यैवेह ग्रहणसंभवे पौराणिकस्वर्गलोकगतापेक्षिकजरामरणाद्यभावस्वीकारस्यानुचितत्वात्। अत एव सप्तमे विध्यन्ताधिकरणेऽनुपदिष्टेतिकर्तव्यताकासु सौर्यादिविकृतभावनास्वितिकर्तव्यताकाङ्क्षायां वैतानिककर्माधिकारप्रवृत्तत्रयीविहितत्वसामान्याद्वैदिक्येव दर्शपौर्णमासिकीतिकर्तव्यतोपतिष्ठते। उक्तं च शास्त्रदीपिकायाम्—

वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता"॥ इति।

न च "यद्येकं यूपं स्पृशेदेष ते वायाविति ब्रूयात्" इति विहितस्यैष

ते वायाविति वचनस्य वैदिकत्वसामान्येन विहितवैदिकयूपस्पर्शनिमित्तकत्वमेव स्यात् । न चेष्टापत्तिः । 'लौकिके दोषसंयोगात्' [ जै० ९ । ३ । ३ । ९ ] इति नावमिकाधिकरणविरोधप्रसङ्गादिति वाच्यम् । "यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यः" इति प्रतिषिध्य यद्येकं यूपं स्पृशेदेष ते वायाविति ब्रूयादित्यनन्तरमेव विहितस्य प्रतिषिद्धप्रायश्चित्तसाकाङ्क्षलौकिकस्पर्शविषयत्वावश्यंभावेन वैदिकविषयत्वासंभवेऽप्यसति बाधके वैदिकविषयत्वस्य युक्तत्वात् । अत एव "यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति विहितेष्टिर्वैदिक एवाश्वदाने । न तु "न केसरिणो ददति" इति निषिद्धे प्रायश्चित्तसापेक्षे सुहृदादिभ्यः स्नेहादिना क्रियमाण इति निर्णीतं तृतीये । तथा 'योगिनः प्रतिस्मर्यते स्मार्ते चैते' [ ब्र० सू० ४ । २ । २१ ] इति सूत्रे स्मार्तस्य वैदान्तेन प्रत्यभिज्ञानमित्युक्तं परैः । ततश्च 'स्वर्गे लोके' इति मन्त्रेऽध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्रह्मगुणाष्टकस्यैव ग्रहणमुचितम् । 'स्वर्गलोका अमृतत्वं भजन्ते' इति तृतीयप्रश्नमन्त्रेऽमृतत्वभाक्त्वश्रवणादमृतत्वशब्दस्याध्यात्मशास्त्रे मोक्ष एव प्रयोगात् । अजीर्यताममृतानामित्यत्रामृतशब्दस्यापि मुक्तपरत्वेनाऽऽपेक्षिकामृतत्वपरत्वाभावात् । उत्तरत्र "ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्" [क०१।२।१०]"अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि [क०१।३।२] इति परस्यैव ब्रह्मणो नाचिकेताग्निप्राप्यत्वकथनेन स्वर्गशब्दस्य प्रसिद्धस्वर्गपरत्वासंभवात् । "नान्यं तस्मान्नचिकेता वृणीते" [ क०१।१।२९ ] इति ब्रह्मेतरविमुखतया प्रतिपादितस्य नचिकेतसः क्षयिष्णुस्वर्गप्रार्थनानुपपत्तेश्च । "मुख्यं वा पूर्वचोदनाल्लोकवत्" [ जै० १२।२।८।२३ ] इत्यत्र समसंख्याकयोः परस्परविरोध एव मुख्यस्य प्राबल्यम् । न ह्यल्पवैगुण्ये संभवति बहुवैगुण्यं प्रयोगवचनं क्षमते । अतो यत्र जघन्यानां भूयस्त्वं तत्र 'भूयसां स्यात्सधर्मत्वम्' [ जै० १२।२।७। २२ ] इति न्याय एव प्रवर्तत इत्येव मीमांसकैः सिद्धान्तितत्वात् । प्रतर्दनविद्यायाम् "एष ह्येव साधु कर्म कारयति । 'एष लोकाधिपतिरेष लोकपालः । ' आनन्दोऽजरोऽमृतः" [ कौ०३ । ८ ] इत्यौपसंहारिकपरमात्मधर्मबाहुल्येन प्रक्रमश्रुतजीवलिङ्गबाधस्य 'प्राणस्तथाऽनुगमात् [ ब्र० सू० १।१।२८ ] इत्यत्र प्रतिपादितत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ २० ॥

नचिकेता आह—

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २१ ॥

'अत्ता चराचरग्रहणात्' [ ब्र० सू० १।२।९ ] इत्यधिकरण इमं मन्त्रं प्रस्तुत्येत्थं हि भगवता भाष्यकृता, अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते । एवं च येयं प्रेत इति न शरीरमात्रवियोगाभिप्रायम् । अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य संज्ञाऽस्तीति' [ बृ० ४।४।१२ ] । अयमर्थः—मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्तितत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्ताऽस्त्यात्मिका नास्त्यात्मिका येयं विचिकित्सा तदपनोदाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां जानीयामिति । तथा हि विप्रतिपद्यन्ते केचिद्वित्तिमात्रस्याऽऽत्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् । परे पाषाणकल्पस्याऽऽत्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरेऽपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते । त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युरिति भणितम् । तथा 'त्रयाणामेव चैवम्' [ ब्र० सू० १।४।६ ] इति सूत्रे तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टमिति भाषितम् । श्रुतप्रकाशिकायां च येयमित्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः, प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्धः । निर्विशेषतापत्तिर्मोक्षश्चेद्वाक्यार्थज्ञानस्योपायता स्यात् । उभयलिङ्गकं प्राप्यं चेत्तथात्वेनोपासनमुपायः स्यात् । अतो मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षमिति च वर्णितम् । अतो येयं प्रेत इत्यस्य मुक्तस्वरूपप-

अपरत्वमेव, न देहातिरिक्तपारलौकिककर्मानुष्ठानोपयोगिकर्तृभोक्त्रात्मकजीवस्वरूपमात्रपरत्वम्। अन्यथा तस्यार्थस्य दुरधिगमत्वप्रदर्शनविविधभोगवितरणप्रलोभनपरीक्षाया असंभवादिति द्रष्टव्यम्। नचिकेतसो ह्ययमभिप्रायः—हितैषिवचनादात्मा परित्यक्तचरमदेहाविर्भूतापहतपाप्मत्वादिगुणाष्टको भवतीत्युपश्रुत्य, स्वर्गे लोके न भयं किंचनास्तीत्यादिना मन्त्रद्वयेन मोक्षसाधनभूताग्निमप्राक्षम्। अधुना तु वादिविप्रतिपत्त्या तद्विषये संदेहो जायते। अयं स्वर्गे लोके न भयं किंचनास्तीत्यादिना मयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्माऽस्तीत्येके नास्तीत्यपरे। त्वयोपादिष्ट एतज्जानीयामिति। अत एव प्रतिवचने "एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते मोदनीयꣳ हि लब्ध्वा" [क० १।२।१३] इत्येतत्प्रश्नानुगुण्यमेव दृश्यते। अतो यथोक्त एवार्थः। केचित्तु 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' [ब्र० सू० ३।२।५] इति सूत्रे तिरोहितमिति निष्ठान्तपद उपसर्जनतया निर्दिष्टस्य तिरोधानस्य 'देहयोगाद्वा सोऽपि [ब्र०सू०३।२।६] इति तदुत्तरसूत्रे सोऽपि तिरोधानभावोऽपीति पुंलिङ्गतच्छब्देन परामर्शदर्शनात्। 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' [ब्र०सू० १।२।११] इत्यत्रापि प्रविष्टावित्युपसर्जनतया निर्दिष्टस्य प्रवेशस्य तद्दर्शनादिति तच्छब्देन परामर्शदर्शनात्। सर्वनाम्नाऽनुसंधिर्वृत्तिच्छन्नस्येति वामनसूत्रे कृत्तद्धितादिवृत्तिन्यग्भूतस्यापि सर्वनाम्ना परामर्शस्याङ्गीकृतत्वात्। येयं प्रेत इति निष्ठान्तप्रेतशब्द उपसर्जनतया निर्दिष्टस्यापि प्रायणशब्दितमोक्षस्य देहयोगाद्वा सोऽपीतिवन्नायमस्तीति चैक इत्यत्रायंपदेन परामर्शोऽस्तु। न चैवं भुक्तवत्यस्मिन्भोजनमस्ति वा न वेति वाक्यवन्मुक्तेऽस्मिन्मोक्षोऽस्ति नवेति संदेहकथनं व्याहतार्थकमिति वाच्यम्। मोक्षसामान्यमभ्युपेत्य मोक्षविशेषे संदेहस्योपपादयितुं शक्यत्वादयमित्यनेन विशेषपरामर्शसंभवात्। ननु न प्रायणशब्दस्य मोक्षवाचित्वं क्वचिद्दृष्टं शरीरवियोगवाचित्वात्। श्रुतप्रकाशिकायां शरीरवियोगवाचित्वमभ्युपेत्यैव चरमशरीरवियोगपरतया व्याख्यातत्वादिति चेदस्त्वेवम्। तथाऽप्ययमित्यनेन चरमशरीरवियोगपरामर्शसंभवात्तद्विषयिण्येव विचिकित्साऽस्तु। ननु तस्य निश्चितत्वात्तद्विषयिणी विचिकित्सा नोपपद्यत इति चेत्सत्यम्। अयं चरमशरीरवियोगो ब्रह्मरूपाविर्भावपूर्वभावित्वेन रूपेणास्ति न वेति विचिकित्सायाः सूपपादत्वादिति वदन्ति ॥२१॥

एवं मुक्तस्वरूपं पृष्टो मृत्युरुपदिश्यमानार्थस्यातिगहनतया पारं प्राप्तुमप्रभवते मध्ये पतयालवे नोपदेष्टव्यमिति मत्वाऽऽह—

देवैरत्रापि विचिकित्सितं पुरा ।

बहुदर्शिभिरपि देवैरस्मिन्मुक्तात्मस्वरूपे विचिकित्सितं संशयितम् ।

न हि सुज्ञेयमणुरेष धर्मः ।

आत्मतत्त्वं न सुज्ञानमिति सूक्ष्म एष धर्मः । सामान्यतो धर्म एव दुर्ज्ञानस्तत्राप्ययं दुर्ज्ञान इति भावः ।

अन्यं वरं नचिकेतो वृणीष्व ।

स्पष्टोऽर्थः ।

मा मोपरोत्सीरति मा सृजैनम् ॥ २२ ॥

मा मेति निषेधे । वीप्सायां द्विर्वचनम् । उपरोधं मा कार्षीः । एनं मां विसृज मुञ्च ॥ २२ ॥

एवमुक्तो नचिकेताः प्राह—

देवैरत्रापि विचिकित्सितं किल ।

स्पष्टोऽर्थः ।

त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।

न सुज्ञेयमिति यदात्मस्वरूपमुक्तवान् ।

वक्ता चास्य त्वादृगन्यो न लभ्यो
नान्यो वरस्तुल्य एतस्य कश्चित् ॥२३॥

त्वादृक्त्वादृश इत्यर्थः । अन्यत्स्पष्टम् ॥ २३ ॥

एवं नचिकेतसोक्तो मृत्युर्विषयस्य दुरधिगमतया मध्ये नङ्क्ष्यतीति निश्चित्य सत्यपि ग्रहणसामर्थ्ये विषयान्तरासक्तचेतस एतादृशं मुक्तात्मतत्त्वं नोपदेशार्हमिति मत्वा मुमुक्षास्थैर्यानुवृत्त्यर्थं प्रलोभयन्नुवाच—

शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् ।

स्पष्टोऽर्थः ।

भूमेर्महदायतनं वृणीष्व ।

पृथिव्या विस्तीर्णमायतनं मण्डलं राज्यं वृणीष्व । अथ वा भूमेः संबन्धि महदायतनं विचित्रशालाप्रसादादियुक्तं गृहं वृणीष्व ।

स्वयं च जीव शरदो यावदिच्छसि ॥ २४ ॥

यावद्वर्षाणि जीवितुमिच्छसि तावज्जीवेत्यर्थः ॥ २४ ॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।

उक्तेन वरेण सदृशमन्यमपि वरं मन्यसे चेत्तदपि वृणीष्व प्रभूतं हिरण्यरत्नादिकं चिरं जीवनं चेत्यर्थः ।

महाभूमौ नचिकेतस्त्वमेधि ।

एधि भव राजेति शेषः । अस्तेर्लोण्मध्यमपुरुषैकवचनम् ।

कामानां त्वा कामभाजं करोमि ॥ २५ ॥

कामानां कामनाविषयं करोमीत्यर्थः ॥ २५ ॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामांश्छन्दतः प्रार्थयस्व ।

छन्दतो यथेच्छमित्यर्थः ।

इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।

रथवादित्रसहिता मया दीयमानाः स्त्रियो मनुष्याणां दुर्लभा इत्यर्थः ।

आभिर्मत्प्रत्ताभिः परिचारयस्व ।

आभिर्मया दत्ताभिः परिचारिकाभिः पादसंवाहनादिशुश्रूषां कारयेत्यर्थः ।

नचिकेतो मरणं माऽनुप्राक्षीः ॥ २६ ॥

मरणमनु मरणान्मुक्तेः पश्चान्मुक्तात्मस्वरूपमिति यावत् । मरणशब्दस्य देहवियोगसामान्यवाचिनोऽपि प्रकरणवशेन विशेषवाचित्वं न दोषायेति द्रष्टव्यम् ॥ २६ ॥

एवं प्रलोभ्यमानोऽपि नचिकेता अक्षुभितहृदय आह—

श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ॥

हेऽन्तक त्वदुपन्यस्ता ये मर्त्यस्य कामास्ते श्वोभावाः श्व अभावो येषां ते तथोक्ता दिनद्वयस्थायिनो न भवन्तीत्यर्थः । सर्वेन्द्रियाणां यदेतत्तेजस्तत्क्षपयन्ति । अप्सरःप्रभृतिभोगा हि सर्वेन्द्रियदौर्बल्यावहा इति भावः ।

अपि सर्वं जीवितमल्पमेव ॥

ब्रह्मणोऽपि जीवितं स्वल्पं किमुतास्मदादिजीवितम् । अतश्चिरजीविकाऽपि न वरणार्हेति भावः ।

तवैव वाहास्तव नृत्यगीते ॥२७॥

वाहा रथादयस्तिष्ठन्त्विति शेषः ॥ २७ ॥

न वित्तेन तर्पणीयो मनुष्यः ॥

न हि वित्तेन लब्धेन कस्यचित्तृप्तिर्दृष्टचरी । न जातु कामः कामानामुपभोगेन शाम्यतीति न्यायादिति भावः । किंच—

लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ॥

त्वां वयं दृष्टवन्तश्चेद्वित्तं प्राप्स्यामहे । त्वद्दर्शनमस्ति चेद्वित्तलाभे को भार इति भावः । तर्हि चिरजीविका प्रार्थनीयेत्यत आह—

जीविष्यामो यावदीशिष्यसि त्वम् ॥

यावत्कालं याम्ये पदे त्वमीश्वरतया वर्तसे । व्यत्ययेन परस्मैपदम् । तावत्पर्यन्तमस्माकमपि जीवनं सिद्धमेव । न हि त्वदाज्ञातिलङ्घनेनास्मज्जीवितान्तकरः कश्चिदस्ति । वरलाभालाभयोरपि तावदेव जीवनमिति भावः ।

वरस्तु मे वरणीयः स एव ॥ २८ ॥

अतो येयं प्रेत इति प्राक्प्रस्तुतो वर एव वरणीय इति भावः ॥ २८ ॥

अजीर्यताममृतानामुपेत्य ॥

जरामरणशून्यानां मुक्तानां स्वरूपं ज्ञात्वा ।

जीर्यन्मर्त्यः क्व तदास्थः प्रजानन् ॥

प्रजानन्विवेकी जरामरणोपप्लुतोऽयं जनस्तदास्थो जरामरणाद्युपप्लुताप्सरःप्रभृतिविषयविषयकास्थावान्क कथं भवेदित्यर्थः ।

अभिध्यायन्वर्णरतिप्रमोदान् ॥

तत्रत्यान्वर्णरतिप्रमोदान् । वर्णा आदित्यवर्णत्वादिरूपविशेषाः । रतिप्रमोदा ब्रह्मभोगादिजनितानन्दविशेषास्तान्सर्वानभिध्यायन्निपुणतया निरूपयन् ।

अनतिदीर्घजीविते को रमेत ॥ २९ ॥

अत्यल्प ऐहिके जीविते कः प्रीतिमान्स्यादित्यर्थः ॥ २९ ॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत् ।

महति पारलौकिके यस्मिन्मुक्तात्मस्वरूपे संशेरते तदेव मे ब्रूहि ।

योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ ३० ॥

इति प्रथमा वल्ली ॥ १ ॥

---

गूढमात्मतत्त्वमनुप्रविष्टो योऽयं वरस्तस्मादन्यं नचिकेता न वृणीते स्मेति श्रुतेर्वचनम् ॥ ३० ॥

इति प्रथमा वल्ली ॥ १ ॥

---

अथ द्वितीया वल्ली ।

एवं शिष्यं परीक्ष्य तस्य मुमुक्षोः स्थैर्यं निश्चित्य तस्योपदेशयोग्यतां मन्वानो मुमुक्षां स्तौति—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयः ।

अतिप्रशस्तं मोक्षवर्त्माप्यन्यत् । प्रियत्वास्पदं भोगवर्त्माप्यन्यत् ।

ते उभे नानार्थे पुरुषꣳ सिनीतः ।

ते श्रेयःप्रेयसी परस्परविलक्षणप्रयोजने सती पुरुषं सिनीतो बध्नीतः । पुरुषं स्ववशतामापादयत इत्यर्थः ।

तयोः श्रेय आददानस्य साधु भवति ।

तयोर्मध्ये श्रेय आददानस्य मोक्षाय प्रयतमानस्य साधु भद्रं भवति ।

हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥

यस्तु प्रेयो वृणीते स पुरुषार्थाद्भ्रष्टो भवति । उ इत्यवधारणे ॥ १ ॥

श्रेयश्च प्रेयश्च मनुष्यमेतः ।

श्रेयश्च प्रेयश्च मनुष्यं प्राप्नुतः ।

तौ संपरीत्य विविनक्ति धीरः ।

तौ श्रेयःप्रेयःपदार्थौ सम्यगालोच्य नीरक्षीरे हंस इव पृथक्करोति ।

श्रेयो हि धीरोऽभि प्रेयसो वृणीते ।

प्राज्ञः प्रेयोपेक्षयाऽभि, अभ्यर्हितं श्रेय एव वृणीते ।

प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥

मन्दमतिर्योगक्षेमाद्धेतोः प्रेयो वृणीते। शरीरस्योपचयो योगः। क्षेमः परिपालनम् ॥ २ ॥

स त्वं प्रियान्प्रियरूपांश्च कामान्।



तादृशस्त्वं स्वतो रूपतश्च प्रियान्काम्यमानान्स्त्र्यादीनित्यर्थः।

अभिध्यायन्नचिकेतोऽत्यस्राक्षीः।



दुःखोदर्कत्वदुःखमिश्रत्वादिदोषयुक्ततया निरूपयंस्त्यक्तवानसीत्यर्थः।

नैतां सृङ्कां वित्तमयीमवाप्तः।

वित्तमयीं धनप्रायां सृङ्कां कुत्सितगतिं विमूढजनसेवितामेतां न प्राप्तवानसि।

यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता।

याऽविद्येति ज्ञाता कामकर्मात्मिका या च विद्येति ज्ञाता वैराग्यतत्त्वज्ञानमयी, एते दूरमत्यन्तविषूच्यौ भिन्नगती परस्परविरुद्धे च।

विद्याभीप्सिनं नचिकेतसं मन्ये।

विद्याभीप्सिनं विद्यार्थिनं विद्याभीप्सितमिति पाठे आहिताग्नित्वान्निष्ठान्तस्य परनिपातश्छान्दसत्वाद्वा।

न त्वा कामा बहवोऽलोलुपन्त ॥ ४ ॥

कामा बहवोऽपि त्वां नालोलुपन्त श्रेयोमार्गाद्विच्छेदं न कृतवन्तः। विषयवशगो न भवसीत्यर्थः। लुपसदेति यङन्ताल्लङ्। छान्दसो यलोपः। यङ्लुगन्ताद्वा छान्दसमात्मनेपदमदभावश्च ॥ ४ ॥

अविद्या या च विद्येति ज्ञातेत्युपात्तमार्गद्वयेऽविद्यामार्गं निन्दति—

अविद्यायामन्तरे वर्तमानाः।



काम्यकर्मादिलक्षणायामविद्यायां मध्ये घनीभूत इव तमसि वर्तमानाः।



स्वयं धीराः पण्डितंमन्यमानाः।

स्वयमेव प्रज्ञाशालिनः शास्त्रकुशलाश्चेति मन्यमानाश्च।

दन्द्रम्यमाणाः परियन्ति मूढाः ।

जरारोगादिदुःखपीडिता अविवेकिनः परिभ्रमन्ति ।

अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥

स्पष्टोऽर्थः। केचित्तु दन्द्रम्यमाणा इति पाठमाश्रित्य विषयकामाग्निना द्रुतचित्ता इत्यर्थं वर्णयन्ति ॥ ५ ॥

न सांपरायः प्रतिभाति बालम् ।

परलोकोऽविवेकिनं प्रति न प्रकाशते ।

प्रमाद्यन्तं वित्तमोहेन मूढम् ।

अनवहितमनस्कं विषयाशावशीकृतमनोरथम् ।

अयं लोको नास्ति पर इति मानी ।

अयमेव लोकोऽस्ति परलोको नास्तीति मन्यमानः ।

पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

मत्क्रियमाणयातनाविषयो भवतीत्यर्थः । व्यासार्यैः 'संयमने त्वनुभूय' [ब्र० सू० ३।१।१३] इति सूत्रेऽयं लोको नास्ति पर उत मानीति पाठानुसारेणायं च लोकः परश्च लोको नास्तीत्यर्थो वर्णितस्तत्र पक्षे तस्येति शेषः पूरणीयः। च शब्दोऽध्याहार्यः। मानीत्यस्य दुर्मानीत्यर्थः। शिष्टपरिग्रहाभावादयं लोको नास्तीत्यस्योपपत्तिर्द्रष्टव्या। दुर्मानी पुनः पुनर्वशमापद्यत इत्युत्तरत्र संबध्यते ॥ ६ ॥

श्रवणायापि बहुभिर्यो न लभ्यः ।

श्रवणलाभोऽपि महासुकृतफलमिति भावः ।

शृण्वन्तोऽपि बहवो यं न विद्युः ।

न हि श्रोतॄणां सर्वेषां परमात्मप्रतिपत्तिः सुलभेति भावः ।

आश्चर्यो वक्ता कुशलोऽस्य लब्धा ।

अस्य कुशलो वक्ता कुशलः प्राप्ता च दुर्लभ इत्यर्थः ।

आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥

कुशलेनाऽऽचार्येणानुशिष्टो ज्ञाताऽप्याश्चर्यः ।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ।

इत्युक्तेरिति भावः ॥ ७ ॥

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।

अवरेणाश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन नरेण देहात्माभिमानिनैष आत्मा सुविज्ञेयो न भवति । कुतो हेतोः । बहुधा चिन्त्यमानो वादिभिरिति शेषः ।

अनन्यप्रोक्ते गतिरत्र नास्ति ।

अनन्येनोच्यमानादात्मनोऽनन्येन तदेकान्तिना ब्रह्मसाक्षात्कारिणा प्रोक्तेऽत्राऽऽत्मनि यादृश्यवगतिः साऽऽत्मावगतिरवरेण प्रोक्ते नास्तीत्यर्थः । यद्वाऽत्र संसारे गतिश्चङ्क्रमणं नास्तीत्यर्थः । यद्वाऽनन्यप्रोक्ते स्वयमवगते गतिरात्मावगतिर्नास्तीत्यर्थः । अन्यप्रोक्त इति पाठेऽवरेण प्रोक्ते सत्यात्मन्यवगतिर्नास्तीत्यर्थः ।

ननु येन केनचिदुपदिष्टेऽप्यूहापोहशालिनः स्यादेवेत्यत आह—

अणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥

यतोऽणोरप्यणीयानात्माऽतस्तत्स्वरूपं तर्कागोचरम् ॥ ८ ॥

नैषा तर्केण मतिरापनेया ।

आत्मविषयिणी मतिस्तर्कप्रापणीया नेत्यर्थः । अतस्तर्ककुशलेनापि स्वयं ज्ञातुं न शक्येत्यर्थः ।

प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।

हे प्रेष्ठ प्रियतमान्येनैव गुरुणोपदिष्टैव मतिर्मोक्षसाधनज्ञानाय भवति । का पुनः सा मतिरित्यत्राऽऽह—

यां त्वमापः सत्यधृतिर्बतासि ।

यां मतिं त्वमाप आप्तवानसि सिषाधयिषिततया निश्चितवानित्यर्थः । सत्यधृतिरसि । सत्याऽप्रकम्प्या धृतिर्यस्य स तथोक्तः । बतेत्यनुकम्पायाम् ।

त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥

त्वादृशः शिष्योऽस्माकं भूयादित्यर्थः ॥ ९ ॥

पुनरपि तुष्ट आह—

जानाम्यहꣳ शेवधिरित्यनित्यम् ।

शेवधिर्निधिः । कुबेराद्यैश्वर्यमेवंजातीयकं कर्मफललक्षणमनित्यमिति जानामि ।

न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।

आत्मतत्त्वमध्रुवैरनित्यफलसाधनभूतैरनित्यद्रव्यसाध्यैर्वा कर्मभिरित्यर्थः ।

ततो मया नाचिकेतश्चितोऽग्निरनित्यै-

र्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥

एवं ज्ञातवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेनानित्यैरिष्टकादिद्रव्यैर्नाचिकेतोऽग्निश्चितस्तस्माद्धेतोर्नित्यफलसाधनं ज्ञानं प्राप्तवानस्मीत्यर्थः। अतो ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोधः ॥ १० ॥

त्वादृङ्नो भूयान्नचिकेतः प्रष्टेति पूर्वमन्त्रोक्तं नचिकेतसः श्रवणाधिकारं विवृणोति—

कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।
स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥

क्रतोः कर्मणः प्रतिष्ठां फलभूतां जगतः कामस्याऽऽप्तिं चतुर्मुखस्थानपर्यन्तसर्वलोकसंबन्धिरूपादिविषयात्मककामप्राप्तिं च दृष्ट्वा मोक्षस्वरूपमाह—आनन्त्यमभयस्य पारमित्यादिना । अविनाशित्वमत्यन्तनिर्भयत्वमपहतपाप्मत्वसत्यसंकल्पत्वादिमहागुणगणरूपस्तोममुरुकीर्तिं च स्थैर्यं च मोक्षगतं दृष्ट्वा लौकिकान्कामान्प्रज्ञाशाली त्वं त्यक्तवानसीत्यर्थः । यद्वा मोक्षरूपपरमात्मस्वरूप एव सर्वकामावाप्तिं तत्रैव सकलजगदाधारत्वं क्रतोरनन्तफलरूपतां चेत्येवं सर्वं परमात्मविषयतया योजनीयम् ॥ ११ ॥

तृतीयं प्रश्नं प्रति वक्ति तं दुर्दर्शमित्यादिना मन्त्रद्वयेन—

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२॥

श्रवणायापि बहुभिर्यो न लभ्य इत्युक्तरीत्या द्रष्टुमशक्यं गूढं तिरोधायककर्मरूपाविद्यातिरोहितम् । सर्वभूतानुप्रविष्टम् । गुहाहितं हृदयगुहावर्तिनम् । गह्वरेष्ठमन्तर्यामिणम् । पुराणमनादिम् । अध्यात्मयोगाधिगमेन । विषयेभ्यः प्रतिसंगृहीतचेतस आत्मनि समवधानमध्यात्मयोगः "यच्छेद्वाङ्मनसी प्राज्ञः" "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह" इत्यादिना वक्ष्यमाणः। तेन योऽयमधिगमो जीवात्मज्ञानं तेन हेतुना देवं परमात्मानं मत्वेत्यर्थः । जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादिति भावः। हर्षशोकौ । विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थः ॥ १२ ॥

एतच्छ्रुत्वा संपरिगृह्य मर्त्यः ।

एतदात्मतत्त्वं श्रुत्वा संपरिगृह्य मननादिकं कृत्वेत्यर्थः ।

प्रवृह्य धर्म्यम् ।

कर्मसाध्यं शरीरादि प्रवृह्य पृथक्कृत्य परित्यज्येत्यर्थः ।

अणुमेतमाप्य ।

एवं स्वात्मभूतं सूक्ष्मतया चक्षुराद्यगोचरं " अणीयान्ह्यप्रतर्क्यम् " । इति निर्दिष्टं परमात्मानं देशविशेषे प्राप्य ।

स मोदते मोदनीयꣳ हि लब्ध्वा ।

स विद्वान्मोदनीयं प्रीतिविषयमपहतपाप्मत्वादिगुणाष्टकविशिष्टं स्वस्वरूपं लब्ध्वा मोदत आनन्दी भवतीत्यर्थः । "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " [छा०८।३।४]'स तत्र पर्येति जक्षत्क्रीडन्रममाणः [छा०८।१२।३] इति श्रुत्यर्थोऽत्रानुसंधेयः ।

एवं प्रश्नस्योत्तरमुक्त्वा नचिकेतसं मोक्षार्हत्वेन स्तौति—

विवृतꣳ सद्म नाचिकेतसं मन्ये ॥ १३ ॥

नचिकेतसं प्रति ब्रह्मरूपं सद्म धाम विवृतद्वारं प्रवेशार्हं मन्य इत्यर्थः । 'तस्यैष आत्मा विशते ब्रह्मधाम' [मु०३।२।४] इति श्रुतेः । ननु ब्रह्मजज्ञं

देवमीड्यं विदित्वेति श्रुत्यैकार्थ्यायाध्यात्मयोगाधिगमेन मत्येत्यत्रापि परमात्मात्मकजीव एव प्रतिपाद्यताम् । ततश्च तं दुर्दर्शमिति पूर्वखण्डोऽपि जीवपर एवास्तु । ततश्च श्रवणायापि बहुभिर्यो न लभ्य इति पूर्वसंदर्भोऽपि परिशुद्धजीवस्वरूपपर एवास्तु ततश्च —

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥
[गी० २।२९]

इति परिशुद्धात्मविषयगीतावचनैकार्थ्यमप्युपपद्यत इतिचेन्न । ब्रह्मजज्ञमिति मन्त्रे ब्रह्मजत्वरूपोपक्रमश्रुतजीवलिङ्गबलेन चरमश्रुतदेवशब्दस्य देवात्मकत्वरूपार्थप्रापणेऽपि तं दुर्दर्शमिति मन्त्रे तादृशजीवलिङ्गाभावेन देवमित्यस्य देवात्मकमित्यर्थाश्रयणायोगात् । एतदेवाभिप्रेत्य भगवता भाष्यकृता 'गुहां प्रविष्टौ' [ब्र० सू० १।२।११] इति सूत्रे परमात्मनस्तावत्तं दुर्दर्शं गूढमनुप्रविष्टमिति गुहाप्रवेशो दृश्यत इत्युक्तम् । तथैवायं मन्त्रः परमात्मपरतया व्यासार्यैर्विवृतः । गह्वरेष्ठमिति पदेन तु परमात्मनो गह्वरशब्दितदुर्विज्ञेयपरिशुद्धात्मस्वरूपशरीरकत्वमप्युक्तम् । इयांस्तुविशेषः—ब्रह्मजज्ञमिति मन्त्रे परमात्मात्मकपरिशुद्धजीवस्वरूपं प्रतिपाद्यते, तं दुर्दर्शमिति मन्त्रे तु जीवशरीरकपरमात्मस्वरूपं प्रतिपाद्यत इति न तयोरैकार्थ्यहानिः ॥ १२ ॥

'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य स मोदते मोदनीयꣳ हि लब्ध्वा' 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति प्रदेशेषु धर्मफलविलक्षणतया ध्यानसाध्यतया प्राप्यतया च निर्दिष्टस्य प्राप्यस्य स्वरूपं चोक्तप्रदेशेष्वेव धर्माविलक्षणतया मत्वेति प्रतिपन्नस्योपायस्य स्वरूपं च धीरो हर्षशोकौ जहातीत्यत्र धीर इति प्रतिपन्नस्य प्राप्तुश्च स्वरूपं शोधयितुं पृच्छत्यन्यत्र धर्मादित्यादिना—

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ॥
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥

Supplementary Questions ... (handwritten margin note)

ननु भाष्ये देवं मत्वेत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्याध्यात्म-

योगाधिगमेनेति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च मत्वा धीरो हर्षशोकौ जहातीति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपशोधनाय पुनः पप्रच्छ। अन्यत्र धर्मादितीत्युक्तेः। कथं तद्विरुद्धतया धीर इति निर्दिष्टस्य प्राप्तिरित्युच्यत इति चेन्मैवं वोचः । अध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टमात्मशब्दवाच्यं प्रजापतिविद्याप्रतिपन्नमुपास्यं प्राप्यभूतं परिशुद्धस्वरूपमेव । अतस्तस्यापि प्राप्यनिर्देशकत्वमेव । वस्तुगत्या तस्य प्राप्तुरभिन्नत्वात्प्राप्तुः प्रत्यगात्मनश्चेति भाष्यं न विरोत्स्यते।अत एव प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह—न जायते म्रियते वा विपश्चिदिति । उत्तरभाष्यमप्युपपद्यते । न हि न जायते म्रियते वा विपश्चिदितिमन्त्रप्रतिपाद्यस्य विपश्चिच्छब्दितपरिशुद्धस्वरूपस्य प्राप्तृरूपतोपपत्तिः ।

' आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ' ।

' विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् " इति मन्त्रप्रतिपाद्यस्यैव प्राप्तृरूपत्वात्। तथैव 'विशेषणाच्च'[ब्र०सू० १।२।१ ] इतिसूत्रभाष्ये प्रतिपादितत्वात्। अतः प्राप्यप्राप्त्रैकाधिकरण्यनिर्देशपरे गुहामन्त्रे छायातपावित्यत्राज्ञत्ववाचिना छायाशब्देन निर्देशो दृष्टो न तु विपश्चिच्छब्देन । अतो यथोक्त एवार्थः । अयं मन्त्रो व्यासार्थैस्त्रयाणामिति सूत्रे विवृतः । धर्म उपायः । धर्मादन्यत्र प्रसिद्धोपायविलक्षण इत्यर्थः । अधर्मो धर्मेतर उपेयः । अधर्मादन्यत्र प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः । अस्मादिति बुद्धिस्थस्तत्साधको विवक्षितः । स एवोपेता स हि प्रसिद्धोपेतृविलक्षणः साधकावस्थायामितरफलविरक्तत्वात्फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च। कृताकृतादिति धर्मादीनां विशेषणं कृताकृताद्धर्मादेर्विलक्षणम् । अन्यत्र भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः। इत्येकां व्याख्यां कृत्वा तस्मिन्पक्षे तु कृताकृताद्भूताद्भव्याच्च धर्मादन्यत्र तादृशादधर्मादन्यत्र तादृशादस्माच्चान्यत्रेत्यन्यत्रशब्दत्रयेणोपपत्तावन्यत्र भूताद्भव्याच्चेत्यन्यत्रशब्दवैयर्थ्यम्, उपायस्य कालत्रयपरिच्छिन्नतया तत्र कालत्रयपरिच्छिन्नवैलक्षण्यानन्वयं च पर्यालोच्य यद्वेत्यादिनाऽपरा व्याख्या कृता तदुच्यते। यद्वा धर्मादधर्माच्चान्यत्रेत्युपासनप्रश्नः । पुण्यपापरूपसाधनविलक्षणत्वादुपासनस्य कृताकृताद्भूताद्भव्याच्चान्यत्र कालादिति यदिति कालापरिच्छिन्नमुपेयं पृष्टम् । प्रश्नउपेतुरपि चेतनस्य नित्यत्वात्प्राप्यान्तर्भावाच्च।तत एव तस्यापि तन्त्रेण प्रश्नस्तदन्तर्गतं च प्राप्तुः स्वरूपमिति वक्ष्यते । तत्र यत्तच्छब्दौ त्रितय-

पराविति भावयति । न च तस्मिन्नपि पक्षे प्रश्नद्वयपरत्वाश्रयणमपि क्लिष्टमेवान्यत्र धर्मादन्यत्राधर्मादिति प्रक्रमस्थान्यत्रशब्दद्वयसामानाधिकरण्यवत् । अन्यत्रास्मात्कृताकृतादन्यत्र भूतादित्युपरितनान्यत्रशब्दद्वयस्यापि सामानाधिकरण्यस्यैव प्रतीतेः । यदि तत्र धर्माधर्मविलक्षणं कालत्रयविलक्षणं यच्चेति च शब्दद्वयमश्रोष्यत तदाऽन्यत्र शब्दयुगद्वयस्य स्वरसतः प्रतीतं सामानाधिकरण्यं पर्यत्यक्षत । अतः प्रक्रमरीत्यनुसारिप्रतीतसामाधिकरण्यभङ्गे कारणाभावादन्यत्र धर्मादन्यत्राधर्मादित्ययमप्यंशः प्राप्यब्रह्मपर एवास्तु । ननु 'नायमात्मा प्रवचनेन लभ्यो न मेधया' [क० १।२।२३] इत्युपायविशेषप्रतिवचनदर्शनेनोपायविशेषप्रश्नस्याप्यत्रैवान्तर्भाव्यतया चशब्दाभावेऽप्यन्यत्रशब्दयुगद्वयस्य सामानाधिकरण्यं भञ्जनीयमिति चेन्न । प्रतिवचनेऽपि 'नायमात्मा प्रवचनेन लभ्य इति प्रीतिरूपापन्नज्ञानैकलभ्यत्वलक्षणप्राप्यधर्मविशेषोपदेशस्यैव दर्शनेनोपायप्रधानप्रतिवचनादर्शनात् । 'नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्' [क० १।२।२४] इति । 'यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति' [क० १।३।७] इति प्रतिवचनदर्शनादन्यधर्मादन्यत्रेति प्रसिद्धोपायविरोधिप्रश्न इत्यपि किं न स्यात् । प्राप्यस्य प्रीतिरूपापन्नज्ञानैकोपायत्वकथनेनोपाये प्रीतिरूपापन्नत्वरूपविशेषः फलिष्यतीति चेत्फलतु नाम । नैतावतोपायस्य प्रश्नप्रतिवचनप्रधानविषयत्वं वक्तव्यमित्यस्ति किं देवदत्तभवनमिति प्रश्नस्य वा बहुचम्पकालंकृतनिष्कुटं द्वारोपान्तलिखितशङ्खचक्रपद्मकं देवदत्तभवनमिति तत्प्रश्नप्रतिवचनस्य वा निष्कुटद्वारोपान्तप्रधानकत्वं कश्चिदभ्युपैति। अतोऽन्यत्र धर्मादन्यत्राधर्मादित्यप्यन्यत्रशब्दचतुष्टयसामानाधिकरण्यलिप्सया धर्माधर्मसाध्यविलक्षणब्रह्मविषय एवायमिति चेत् । अत्रोच्यते—असौ देवदत्तादुत्पन्नो न भवत्यपि तु यज्ञदत्तादिति वाक्यं श्रुत्वा देवदत्तादन्यं यं पश्यसि तं मे ब्रूहीति प्रवृत्तस्य प्रतिवचनस्य देवदत्तान्ययज्ञदत्तपरत्ववल्लक्षणया देवदत्तपुत्रान्यप्रश्नपरत्वस्याप्रतीतेः । तद्वत्कर्मसाध्यं न ब्रह्मापि तु ज्ञानसाध्यमित्युपदेशानन्तरप्रवृत्तस्य धर्मादन्यत्रेति प्रश्नस्य धर्मविलक्षणज्ञानरूपोपायपरत्वमेव युक्तं न तु धर्मशब्दलक्षणया धर्मसाध्यविलक्षणब्रह्मपरत्वम् । तथाऽधर्मादन्यत्रेत्यत्रापि सामानाधिकरण्येनोपायपरत्वमेव निश्चितम् । कालत्रयपरिच्छिन्नविलक्षणवाचकउपरितनान्यत्रशब्दद्वये कालत्रयापरिच्छिन्नोपायपरामर्शासंभवात्सामानाधिकरण्यभङ्गेन प्राप्यपरत्वमेव युक्तम् । नीलो दीर्घो ह्रस्वो रक्तः ।

इत्युक्ते नीलदीर्घपदयोरविरोधात्सामानाधिकरण्यं सिध्यति । रक्तह्रस्वयोश्च परस्पराविरोधात्सामानाधिकरण्यं सिध्यति । न तु चतुर्णां चशब्दाभावेऽपि सामानाधिकरण्यं दृष्टमपि तु पुरुषद्वयप्रश्नपरत्वमेव । एवमिहापि यच्छब्दान्वितचशब्दद्वयाभावेऽपि न तत्सामानाधिकरण्यमवगम्यते । अस्तु वा भवदुक्तरीत्या सामानाधिकरण्यम् । अथापि प्रश्नप्रतिवचनयोर्द्वितीयव्याख्यायामुपेयप्रश्नमुपेत्रन्तर्भावादुपायस्याप्यन्तर्भूतत्वात् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' [ब्र० सू० १।४।६] इतिसूत्रनिर्दिष्टोपायोपेतृप्रश्नप्रतिवचनस्य सुघटिततया क्षतेरभावात् । 'तत्ते पदं संग्रहेण ब्रवीमि' [क० १।२।१५।] इति पदशब्दितप्राप्यस्यैव प्रतिवचनप्रतिपाद्यत्वस्य स्पष्टं प्रतीतेरित्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ॥ १४ ॥

एवं पृष्टो मृत्युः 'न जायते म्रियते' इत्यादिना विस्तरेण प्रतिपिपादयिषुरिदानीं श्रोतुरादरातिशयसिद्ध्यर्थं प्राप्यवेभवं प्रकाशयन्संग्रहोक्तिं प्रतिजानीते—

सर्वे वेदा यत्पदमामनन्ति ।

पद्यते गम्यत इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची । यत्स्वरूपं सर्वे वेदाः साक्षात्परम्परया वा प्रतिपादयन्तीत्यर्थः । अनेनास्या उपनिषदः प्रजापतिविद्यावत्परिशुद्धात्मस्वरूपविषयत्वेवास्तु 'न जायते म्रियते वा विपश्चित्, [ क० १।२।१८ ] हन्ता चेन्मन्यते हन्तुम [ क० १।२। १९ ] इति मन्त्रद्वयस्य परिशुद्धात्मस्वरूपपरत्वस्य संप्रतिपन्नत्वात् । 'अणोरणीयान्' इति मन्त्रद्वयस्यापि

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । [ गी० २।१७। ]
निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ।

इति स्मृतिवचनाभ्यां सर्वान्तःप्रवेशयोग्यातिसूक्ष्मतया व्यापकतया च प्रतिपादिते प्रत्यगात्मन्युपपन्नत्वात् ।

सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् [ गी० १३।१५। ] ।

इति गीतानुसारेण "आसीनो दूरं व्रजति शयानो याति सर्वतः" [ क० १।२।२१ ] इति मन्त्रस्यापि तत्रैव युक्तत्वात् । 'ग्रसिष्णु प्रभविष्णु च [ गी० १३।१६ ] इत्युपबृंहणानुसारात्, 'यस्य ब्रह्म च क्षत्रं च' [ क० १।२।२५ ] इति मन्त्रस्यापि तत्र संगतार्थत्वात् ।

द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम् ।
प्रसूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत्परमं च यत्पदम् ।

इति स्मृत्यनुसारेण 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' [ क० १।३।९ ] इति मन्त्रस्यापि शुद्धात्मस्वरूपे संगतार्थत्वात् ।

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।

इति स्मृत्यनुसारेण 'सा काष्ठा सा परा गतिः' [ क० १।३।११ ] इति मन्त्रस्यापि परिशुद्धात्मविषयत्वसंभवात् ।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।

इतिस्मृत्यनुसारेण,'एषु सर्वेषु भूतेषु' [ क० १।३।१२ ]इति मन्त्रस्यापि विशुद्धस्वरूपपरत्वोपपत्तेः'पराञ्चि खानि' [ क० २।१।१ ] इति मन्त्रे परागर्थनिन्दाद्वारेण प्रत्यगर्थस्यैव प्रकरणप्रतिपाद्यत्वाविष्करणात्। 'तिष्ठन्तं परमेश्वरम्' [गी०१३।२७] इति गीतानुसारेण "ईशानो भूतभव्यस्य" [ क० २।१।५ ] इति मन्त्रस्यापि तत्रैव शुद्धात्मस्वरूपे संगतार्थत्वात्। भेदप्रसक्तिमति प्रत्यगात्मस्वरूप एव 'नेह नाना' [ क० २। १।११ ] इति निषेधस्यापि संगतार्थत्वात् ।

अभेदव्यापिनो वायोस्तथाऽसौ परमेश्वरः ।

इति स्मृतिप्रत्यभिज्ञापकस्य 'वायुर्यथैको भुवनं प्रविष्टः' [ क०२।२। १० ] इति मन्त्रस्यापि परिशुद्धस्वरूपपरत्वसंभवात् । 'सर्वतःपाणिपादं तत् [ गी० १३।१३ ]इति गीताभाष्ये ब्रह्मणा परमसाम्यमापन्ने शुद्धात्मस्वरूपे सर्वतःपाणिपादादिकार्यकर्तृत्वं संभवतीत्युपपादितत्वात्। 'एकं बीजं बहुधा यः करोति' [ श्वे० ६।१२ ] इति मन्त्रस्यापि परिशुद्धपरत्वेऽनुपपत्त्यभावात् 'न तत्र सूर्यो भाति' [ क० २।२।१५ ] इति मन्त्रस्यापि 'न तद्भासयते सूर्यः' [गी०१५।६]। ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते' [गी०१३।१७] इति गीतावचनेन परिशुद्धात्मस्वरूपपरत्वस्य युक्तत्वात् ।

तस्माच्छरीरात्प्रवृहेदित्यौपसंहारिकमन्त्रस्य शुद्धात्मपरत्व एव स्वारस्यात् । कृत्स्नाया अप्युपनिषदः प्रजापतिवाक्यवत्प्रत्यगात्मस्वरूपमात्रपरत्वोपपत्तौ प्रत्यगात्मपरमात्मस्वरूपप्राप्यद्वयवस्त्वक्लेशाश्रयणं यथेति शङ्का प्रत्युक्ता। सर्ववेदप्रतिपाद्यस्यैव तत्ते पदं संग्रहेण ब्रवीमीति वक्तव्ये त्वेतत्प्रतिज्ञानात्परमात्मस्वरूपप्रतिपादकवेदभागप्रतिपाद्यस्य शुद्धस्वरूपे संभवाच्छुद्धस्वरूपस्याप्यन्तर्यामिणः परमात्मस्वरूपस्य शुद्धरूपप्रतिपादकभागेनापि प्रतिपाद्यत्वसंभवादिति द्रष्टव्यम् ।

तपाꣳसि सर्वाणि च यद्वदन्ति ।

तपःप्रधाना उपरितनभागा इति व्यासार्यैर्व्याख्यातम् ।

यदिच्छन्तो ब्रह्मचर्यं चरन्ति ।

ब्रह्मचर्यं गुरुकुलवासः स्त्रीसङ्गराहित्यादिलक्षणं यदिच्छन्तोऽनुतिष्ठन्ति ।

तत्ते पदं संग्रहेण ब्रवीमि ।

संगृह्यतेऽनेनेति संग्रहः शब्दः । प्राप्यवक्तव्यत्वप्रतिज्ञापदेऽस्मिन्मन्त्रेऽर्थात्प्रणवप्रशंसाया लाभात्प्रणवं प्रशस्येति भाष्यस्य च सर्वे वेदा इत्यादिपादत्रयोक्तब्रह्मप्रतिपादकतया प्रशस्येत्यर्थ इति श्रुतप्रकाशिकावचनस्य नानुपपत्तिरिति द्रष्टव्यम् ॥

संक्षेपेण तत्प्रतिपादकं किमित्यत आह—

ओमित्येतदिति ॥ १५ ॥

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । इति प्रणवस्य ब्रह्मवाचकत्वात्प्रणवावयवयोरकारमकारयोः परजीववाचितयोपायोपेत्रोरप्युपदिष्टत्वमस्तीति द्रष्टव्यम् ॥ १५ ॥

एवं वाचकं प्रणवं द्वाभ्यां मन्त्राभ्यां स्तौति—

एतद्ध्येवाक्षरं ब्रह्म ।

ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीतेति ब्रह्मप्राप्तिसाधनध्यानालम्बनत्वादिदमेवाक्षरं ब्रह्मप्राप्तिसाधनत्वाद्ब्रह्म ।

एतद्ध्येवाक्षरं परम् ।

जप्येषु ध्येयेषु च श्रेष्ठमित्यर्थः ।

एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

एतदक्षरमुपासमानोऽनेनोपासनेनेदं फलं मे भूयादिति यत्कामयते तस्य तद्भवतीत्यर्थः ॥ १६ ॥

एतदालम्बनꣳ श्रेष्ठम् ।

एतदोंकाररूपमालम्बनं श्रेष्ठं ध्यानादेरिति शेषः । अत एव—

एतदालम्बनं परम् ।

एतदालम्बनकं ध्यानादि सर्वोत्कृष्टमित्यर्थः ।

एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

स्पष्टोऽर्थः ॥ १७ ॥

प्रथमं तावत्प्रत्यगात्मस्वरूपमाह न जायते म्रियते वेत्यादिना मन्त्रद्वयेन—

न जायते म्रियते वा विपश्चित्,
नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ १८ ॥

हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥१९॥

इदं च प्रस्तुत्य व्यासार्यैरित्थमुक्तम् । इदं मन्त्रद्वयं तावदेकविषयम् । 'न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वाद्द्वितीयमन्त्रस्य । हन्ता चेदिति मन्त्रश्च जीवविषय एव लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात् । परमात्मा हि प्रत्यक्षागोचरः कथं तस्मिन्वध्यतादिप्रतिपत्तिः । अहमेवं हन्मि, अयं मां हन्तुमागच्छतीति वध्यघातुकभावाभिमानो हि देहिनां जीवविषय एव । ननु नास्य जरयैतज्जीर्यतीतिवत्परमात्मनोऽपि हननप्रतिषेध उपपद्यते । सत्यम् । तत्र दहराकाशस्य देहान्तःस्थित्या शङ्कितविकारनिषेध उपपद्यत इह तु लोकसिद्धा भ्रान्तिरनूद्य निरस्यते । न हि परमात्मनि वध्यघातुकभावभ्रान्तिः कस्याप्यस्ति । अतो न वादनिषेधावनुपपन्नौ । न जायत इति मन्त्रश्च तेनैकार्थः । अतो मन्त्रद्वयमपि जीवविषयकमेवेति । अक्षरार्थस्तु न जायते म्रियते वा विपश्चित्—विपश्चित्त्वार्होऽयमिदानीमपि जननमरणशून्य इत्यर्थः । नायं कुतश्चित्—उत्पादकशून्यः । न बभूव कश्चित्—पूर्वमपि मनुष्यादिरूपेण जननशून्यः । न जायत इत्यत्र हेतुमाह—अज इति । न म्रियत इत्यत्र हेतुमाह—नित्य इति । न कुतश्चिदित्यत्र हेतुमाह—शाश्वत इति । पूर्वं न बभूवेत्यत्र हेतुमाह—पुराण इति । ननु कथमस्य नित्यत्वं शरीरान्तर्वर्तिनः शरीरविनाशानुविनाशित्वावश्यंभावादित्याह—न हन्यते हन्यमाने शरीरे। स्पष्टोऽर्थः । हन्ता चेन्मन्यते हन्तुम् । अहमेनं वधिष्यामीति देहात्मदृष्ट्या मन्यते चेदित्यर्थः । हतश्चे-

न्मन्यते हतम् । छिन्नदेहावयवो देहात्मदृष्ट्याऽऽत्मानं हतोऽहमिति मन्यते चेदित्यर्थः। 'उभौ तौ न विजानीतः' । आत्मस्वरूपमिति शेषः । नायं हन्ति । आत्मानमिति शेषः । न हन्यते आत्मस्वरूपमिति शेषः । न च वेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथं हननादिप्रसक्तितत्पूर्वकनिषेधाविति वाच्यम् । तस्यैव क्षेत्रीभूततया तत्प्रयुक्ततत्संभवादिति द्रष्टव्यम् । इमौ मन्त्रौ प्रस्तुत्य वियत्पादे चिन्तितम् । तत्र हि 'वायुश्चान्तरिक्षं चैतदमृतम् [बृ० २।३।३] इति वाय्वन्तरिक्षयोर्नित्यत्वश्रवणेऽपि "आत्मन आकाशः संभूतः" "आकाशाद्वायुः"[तै० २।१]इति तयोरुत्पत्तिश्रवणादेकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं सर्वस्य वस्तुनो ब्रह्मविकारत्वस्यावश्याश्रयणीयत्वाच्च यथोत्पत्तिरङ्गी क्रियते, एवं जीवानां नित्यत्वश्रवणेऽपि "तोयेन जीवान्विससर्ज भूम्याम्" "प्रजापतिः प्रजा असृजत" इति जीवानामपि सृष्टिश्रवणादेकविज्ञानेन सर्वविज्ञानसिध्यर्थं च जीवस्यापि सृष्टिरभ्युपगन्तव्येति पूर्वपक्षे प्राप्ते "नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" [ब्र०सू० २।३।१७]इति सूत्रेण सिद्धान्तितम् । आत्मा नोत्पद्यते न जायते म्रियते वा विपश्चिज्ज्ञाज्ञौ द्वावजावित्युत्पत्तिनिषेधश्रुतेः। ताभ्य एव श्रुतिभ्यो नित्यत्वावगमाच्च। नचोत्पत्तिश्रुतेः सर्वविज्ञानप्रतिज्ञाविरोधः शङ्क्यः स्वरूपस्य नित्यत्वेऽपि ज्ञानसंकोचविकाशलक्षणान्यथाभावरूपावस्थान्तरापत्तिसत्त्वेनोत्पत्तिश्रुतेः सर्वविज्ञानप्रतिज्ञायाश्चोपपत्तेः । उत्पत्तिनिषेधश्रुतेश्च स्वरूपान्यथाभावलक्षणोत्पत्त्यभावपरतयाऽविरोधात् । इयांस्तु विशेषः—चिदचिदीश्वराणां त्रयाणामप्यवस्थान्तरापत्तिलक्षणोत्पत्तिरूपो विकारोऽस्त्येव । तथाऽप्यचेतनानां स्वरूपान्यथाभावलक्षणोत्पत्तिः। जीवानां तु सा नास्ति । अपि तु ज्ञानसंकोचविकासलक्षणस्वभावान्यथाभावरूपोत्पत्तिः । ईश्वरस्य तु तन्नियन्तृत्वाद्यवस्थासत्त्वेऽप्युक्तलक्षणानिष्टविकारद्वयाभावान्नित्यो नित्यानामिति परमात्मन इतरविलक्षणनित्यत्वोक्तिरिति द्रष्टव्यम् । वर्णितश्च सूत्रार्थः । ननु जायते म्रियत इति प्रतिषिद्धा जीवोत्पत्तिः, वासुदेवात्संकर्षणो नाम जीवो जायत इति प्रतिपादयतः पञ्चरात्रस्य कथं प्रामाण्यमिति चेत । अस्याः शङ्कायास्तर्कपादे निराकृतत्वात् । तथा हि वासुदेवात्संकर्षणो नाम जीवो जायत इति जीवस्योत्पत्तिः प्रतिपाद्यते सा च जीवे न संभवति । तथा संकर्षणात्प्रद्युम्नसंज्ञं मनो जायत इति कर्तुर्जीवात्करणस्य मनस उत्पत्तिः श्रूयमाणाऽपि न संभवति । कर्तुर्जीवात्कर-

णोत्पत्तेरेतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति मनसो ब्रह्मोत्पत्तिप्रतिपादकश्रुतिविरुद्धत्वादिति "उत्पत्त्यसंभवात् । न च कर्तुः करणम् "। [ब्र० सू० २।२।४२।४३] इति द्वाभ्यां सूत्राभ्यां पूर्वपक्षं कृत्वा "विज्ञानादिभावे वा तदप्रतिषेधः" "विप्रतिषेधाच्च" [ब्र० सू० २।२।४४।४५] इति द्वाभ्यां सूत्राभ्यां सिद्धान्तितम् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । विज्ञानं च तदादि च विज्ञानादि । ननु च 'क्त्यन्तो घुः' इत्यादिशब्दस्य नित्यपुंलिङ्गत्वात्कथमेतदिति चेत् । नायं घुरपि तु, अद् भक्षण इत्यस्मादावश्यकार्थे णिप्रत्यय आदीति रूपं सिध्यति । तेन च निखिलजगत्संहर्तृमुखेन कारणत्वं प्रतिपाद्यत इति द्रष्टव्यम् । आदिविज्ञानं परमात्मेत्यर्थः । संकर्षणो नाम जीवो जायत इति श्रुतस्य जीवशब्दार्थस्य तदभिमानिपरमात्मभावे सति शास्त्रप्रामाण्यप्रतिषेधः सिध्यति । परमात्मनश्च जननं नाम स्वेच्छाधीनशरीरपरिग्रहः। तस्मिन्नेव पाञ्चरात्रे स ह्यनादिरनन्तश्चेति जीवोत्पत्तेर्विशेषेण प्रतिषिद्धतया तद्विरुद्धाभिधानासंभवात् । संकर्षणो नाम जीवो जायत इत्यनेन जीवाभिमानिसंकर्षणस्येच्छाधीनशरीरपरिग्रहरूपोत्पत्तिः प्रतिपाद्यत इति न पाञ्चरात्राप्रामाण्यमिति सूत्रार्थः । ननु सांख्यपाशुपताद्यधिकरणवदिदमप्यधिकरणं पाञ्चरात्रप्रामाण्यप्रतिषेधकं किं न स्यादितिचेत् । वेदोपबृंहणाय भारतसंहितां कुर्वता बादरायणेन—

इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥
भविष्यति प्रमाणं वै एतदेवानुशासनम् ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मभिः ।
सात्वतं विधिमास्थाय गीतः संकर्षणेन यः ॥
अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ।

इत्यादिभिर्वचनैर्बहुषु स्थलेषु पाञ्चरात्रप्रामाण्यं प्रतिष्ठापितवता शारीरकशास्त्रे तत्प्रामाण्यं निराक्रियत इत्यस्यासङ्गतत्वात् । न चैवं—

परं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥

इति कापिलमतस्य भारते भ्रमादिदोषाभावप्रतिपादनात् ।

सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥
यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ।

इति सांख्ययोगपाशुपतादीनामपि नारायणनिष्ठत्वप्रतिपादनात् ।

तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः ।

इति तत्तच्छास्त्रकर्तृणामपि नारायणप्रतिपादकत्वस्य प्रतिपादनात् ।

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥

इति सर्वेषामप्यात्मप्रमाणत्वप्रतिपादनाच्च ।

सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम् ॥

इति पाञ्चरात्रदृष्टान्तेनेतरशास्त्राणामपि प्रामाण्यप्रतिपादनाच्च । तत्पादे सांख्यपाशुपताद्यागमानामपि प्रामाण्यं न निराक्रियत इति-चेत् । सत्यम् । भ्रमविप्रलिप्सादिराहित्यं शास्त्रकर्तॄणां परमतात्पर्यं च नारायण एवेति समानम् । तथाऽप्यबहुश्रुततया, तद्वक्तॄणां हृदयमजानन्त आपातप्रतिपन्नमेवार्थं तात्त्विकं मन्यमाना ये प्रत्यवतिष्ठन्ते तान्प्रति सांख्याद्यागमानामापातप्रतिपन्नार्थमात्रपरत्वमन्वारुह्य सूत्रकृता तन्निरासः कृतः । पाञ्चरात्रशास्त्रं तु परमतत्त्वहितपुरुषार्थानामेवाऽऽपाततोऽपि प्रतीतेर्वेदविरुद्धनिमित्तोपादानभेदाद्यप्रतीतेश्च कृत्स्नं प्रमाणमेवेति नैकदेशेऽप्यप्रामाण्यशङ्कावकाश इति द्रष्टव्यम् । एवमेव व्यासार्यैरुक्तम् । प्रकृतमनुसरामः ॥ १८ ॥ १९ ॥

एवं मन्त्रद्वयेन प्रत्यगात्मस्वरूपं विशोध्य तदात्मभूतपरमात्मस्वरूपमाहाणोरणीयानित्यादिना—

अणोरणीयान्महतो महीयान् ॥

अणोः सर्वाचेतनापेक्षया सूक्ष्माच्चेतनादणुतरस्ततोऽपि सूक्ष्मस्तद्वन्तः-

प्रवेशयोग्य इत्यर्थः । महत आकाशादेरपि महत्तरः स्वाव्याप्तवस्तुरहित इत्यर्थः ।

आत्माऽस्य जन्तोर्निहितो गुहायाम् ॥

अस्य जन्तोर्न जायते म्रियते वेति मन्त्रद्वयनिर्दिष्टस्य चेतनस्याऽऽत्माऽन्तः प्रविश्य नियन्तेत्यर्थः । अतश्च पूर्वमन्त्रद्वयनिर्दिष्टात्प्रत्यगात्मस्वरूपादणोरणीयानितिमन्त्रसंदर्भप्रतिपाद्योऽन्य एवेति सिद्धम् । न चास्य जन्तोरित्यस्य हृदयगुहावाचिना संबन्धसापेक्षेण गुहायामित्यनेनैवान्वितत्वेनाऽऽत्मेत्यनेन नान्वय इति शङ्क्यम् । आत्मशब्दान्वितस्यैव काकाक्षिन्यायेनोभयत्रान्वये दोषाभावात् । मूलतः शाखां परिवास्योपवेषं करोतीत्यत्र शाखां मूलतः परिवास्य मूलत उपवेषं करोतीति परिवासनान्वितस्यापि मूलत इत्यस्योपवेषं करोतीत्यनेनान्वयस्याप्यङ्गीकृतत्वात्, जीवहृदयगुहावर्तित्वप्रतिपादनेऽपि जीवभेदसिद्धेश्च । न हि जीवस्यैव जीवगुहावर्तित्वप्रतिपादने प्रयोजनमस्ति । ननु न जायत इत्युपन्यस्तस्याऽऽत्मनो जायमानवाचिजन्तुशब्देन परामर्शस्यानुपपन्नतयाऽस्य जन्तोरित्यस्य प्रत्यक्षादिसंनिधापितदेहपरतया एव वक्तव्यत्वेन तद्गुहाहित आत्मा प्रागुपन्यस्तो जीव एवास्तु । न च कर्तृभोक्तृत्वादिविशिष्टतया सदाऽहमिति भासमाने जीवे "कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति । क इत्था वेद यत्र सः" इत्युत्तरसंदर्भं प्रतिपाद्य दुर्विज्ञानत्वं कथमन्वेतीतिवाच्यम् । जीवस्य कर्तृत्वादिविशिष्टतया सर्वलोकविदितत्वेऽपि मुक्तप्राप्यब्रह्मरूपविशिष्टतया दुर्विज्ञानत्वसंभवादितिचेन्न ।

प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ।

इति जन्तुशब्दस्य चेतनपर्यायतया प्रकृतजीववाचित्वसंभवात् । अस्येतिशब्दस्य च पूर्वसंदर्भोपस्थापितप्रत्यगात्मविषयत्वसंभवे प्रत्यक्षाद्युपस्थापितदेहविषयत्वाश्रयणस्यायुक्तत्वात् । अत्यन्ताणुत्वमहत्त्वयोः "एष आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" [छा० ३।१४।३] इत्यादिषु परमात्मधर्मतयाऽणोरणीयानितिमन्त्रप्रतिपाद्यस्य जीवत्वशङ्काया असंभवात् । ननु "नेतरोऽनुपपत्तेः" [ब्र० सू० १।१।१६] इति सूत्रे सह ब्रह्मणा विपश्चितेति वाक्यश्रुतविपश्चित्त्वस्य ब्रह्मासाधारणलिङ्गत्वस्य

भाष्ये प्रतिपादितत्वात् । न जायते म्रियते वा विपश्चिदिति मन्त्रस्यापि घररीत्या परमात्मपरत्वमेवास्तु । एवं सत्यन्यत्र धर्मादितिप्रश्नस्य प्राप्यद्वयपरत्वम् । प्रतिवचनस्य प्राप्यद्वयपरत्वमाश्रित्य न जायत इत्यादिमन्त्रद्वयस्य प्राप्यजीवस्वरूपपरत्वम् । अणोरणीयानिति संदर्भस्य च परमात्मपरत्वमित्यादिपरिकल्पनक्लेशो नाऽऽश्रयणीय इतिचेन्न । हननादिप्रतिषेधाद्यनुपपत्त्या विपश्चिच्छब्दे मुख्यार्थत्यागस्याऽऽवश्यकत्वेन तन्मन्त्रद्वयस्याणोरणीयानिति मन्त्रसंदर्भस्य चैकविषयत्वासंभवात् । शिष्टमुत्तरत्र स्पष्टयिष्यते ।

तमक्रतुः पश्यति वीतशोको ।
धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥

तं तादृशं परमात्मानमक्रतुः काम्यकर्मादिरहितो धातुर्धारकस्य परमात्मनः प्रसादादात्मनो महिमानं महत्वसंपादकं स्वसार्वज्ञादिगुणाविर्भावहेतुभूतं परमात्मानं यदा पश्यति तदा वीतशोको भवतीत्यर्थः । द्युभ्वाद्यधिकरणे [ब्र० सू० १।३।१] तु 'जुष्टं यदा पश्यत्यन्यमीशम्' [श्वे० ४।७] इति मन्त्रखण्डं प्रस्तुत्य, अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणमस्येश्वरस्य महिमानं च निखिलजगन्नियमनरूपं च पश्यति तदा वीतशोको भवतीति भगवता भाष्यकृता व्याख्यातत्वात्तदनुसारेणापि परमात्मनो निखिलजगन्नियमनरूपं महिमानं च यः पश्यति स वीतशोको भवतीत्यर्थः । धातुः प्रसादाद्वीतशोको भवतीति वाऽन्वयः ।

प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षयः ।

इतिस्मृतेरिति द्रष्टव्यम् । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमिति पाठे, अक्रतुं कर्मकृतोत्कर्षापकर्षरहितमित्यर्थः॥२०॥

धातुःप्रसादशब्दितभगवदनुग्रहशून्यस्य परमात्मतत्त्वमत्यन्तालौकिकत्वाद्दुरधिगममिति दर्शयति—

आसीनो दूरं व्रजति शयानो याति सर्वतः ।

परमात्मनः सर्वात्मगत्वेनेतरत्र विरुद्धतया प्रतीयमाना अप्यासीनदूरगन्तृत्वादिधर्मा जीवद्वारा भवन्तीति भावः ।

कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥

हर्षामर्षरूपविरुद्धधर्माध्यस्तं तं परमात्मप्रसादानुगृहीतमादृशजनादन्यः को वा ज्ञातेत्यर्थः ॥ २१ ॥

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।

कर्मकृतशरीररहितमस्थिरेषु शरीरेषु नित्यत्वेन तत्र स्थितम् ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥

महान्तं प्रसिद्धवैभवशालिनं विभुं सर्वव्यापिनम् । शिष्टं स्पष्टम् ॥२२॥

ईदृशात्मप्राप्त्युपायं दर्शयति—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।

अत्र प्रवचनशब्देन प्रवचनसाधनं मननं लक्ष्यते । उत्तरत्र न मेधया न बहुना श्रुतेनेति वक्ष्यमाणध्यानश्रवणसमभिव्याहारबलेन प्रवचनशब्देन मननस्यैव गृहीतुमुचितत्वात् । अध्यापनरूपस्य प्रवचनस्य हेतुत्वाप्रसक्तेश्च । तथैव व्यासार्यैर्विवृतत्वाच्च ।

यमेवैष वृणुते तेन लभ्यः ।

एष आत्मा यं साधकं प्रार्थयते तेन लभ्यः प्रार्थनीयपुंसा लभ्य इत्यर्थः । तत्प्रार्थनीयत्वं च तत्प्रियतमस्यैव पुंसः । प्रियतमत्वं च तत्प्रीतिमत एव । ततश्च भगवद्विषयिण्युपासकस्य प्रीतिर्भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः ।

तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥ २३ ॥

तस्योपासकस्यैष आत्मा परमात्मा स्वरूपं प्रकाशयति स्वात्मानं प्रयच्छतीत्यर्थः । वृणुत इति पाठेऽपि स एवार्थः ॥ २३ ॥

परमात्मप्राप्तिहेतूपासनाङ्गतया कांश्चिद्धर्मानुपदिशति—

नाविरतो दुश्चरितात् ।

इत्यादि । यस्तु परदारपरद्रव्यापहारादनिवृत्तः ।

नाशान्तो नासमाहितः । नाशान्तमानसो

वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥

अनुपशान्तकामक्रोधवेगः, नानाविधव्यापारविक्षिप्ततयाऽनवहितचित्तः, अनिगृहीतमनाश्चैतं परमात्मानं प्रज्ञानेन नाऽऽप्नुयादित्यर्थः । पुरुषार्थस्यैवानृतवदननिषेधस्य दर्शपूर्णमासप्रकरणे क्रत्वङ्गतया नानृतं वदेदिति निषेधवत्पुरुषार्थस्यापि दुश्चरितविरत्यादेरुपासनाङ्गतया विधानमुपपद्यते । ततश्च यस्तु पुरुषार्थमपि दुश्चरितनिषेधमतिलङ्घ्य परमा-

त्मोपासनमविगुणं चिकीर्षति तस्य दुश्चरितनिषेधरूपाङ्गवैगुण्याद्दुपासनासाद्गुण्यं न सिद्ध्यतीति भावः ॥ २४ ॥

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

ब्रह्म च क्षत्रं च ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगद्यस्यौदनो भवति यस्य विनाश्यो भवतीत्यर्थः। यस्य मृत्युः स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुर्भवति। स निखिलचराचरसंहर्ता परमात्मा यत्र यस्मिन्प्रकारे स्थितो यत्प्रकारविशिष्टस्तं प्रकारमित्थमिति को वेदेत्यर्थः। ननु ब्रह्मक्षत्रपदेन कृत्स्नचराचरग्रहणे किं बीजमिति चेदुच्यते। ब्रह्म च क्षत्रं चौदन इत्युक्ते ब्राह्मणक्षत्रियवर्णयोः कंचित्प्रत्योदनशब्दमुख्यार्थासंभवादोदनशब्देन भोज्यत्वं वा भोग्यत्वं वा विनाश्यत्वं वा लक्षणीयम्। न हि ब्रह्मक्षत्रमात्रभोक्ता तन्मात्रसंहर्ता वा कश्चिज्जीवो वा परमात्मा वाऽस्ति। न चान्तरादित्यविद्यायां ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्ट इति सर्वलोकेश्वरे परमात्मन्युपासनार्थं लोकविशेषेशितृत्वश्रवणवत्सर्वसंहर्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहरणमुपासनार्थमुपदिश्यतामिति वाच्यम्। तद्वदस्योपासनाप्रकरणत्वासंभवात्। अतो ब्रह्मक्षत्रग्रहणस्य चराचरमात्रोपलक्षणत्वं युक्तम्। उक्तं च सूत्रकृता। 'अत्ता चराचरग्रहणात्' [ ब्र०सू०१।२।९ ] इति। नन्वेवमप्योदनशब्देन किमिति विनाश्यत्वं लक्ष्यते गौणत्वमपि शब्दस्य साधारणगुणमपहायासाधारणगुणेनैव निर्वाह्यम्। न ह्यग्निर्माणवक इत्यत्राग्निशब्देन पैङ्गल्यादेरिव द्रव्यत्वादेरुपस्थितिरस्ति। अत एव प्रेतुर्होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्येत्यध्वर्युप्रैष उद्गातृशब्दस्य बहुवचनानुरोधेन बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय विशेषाकारेणोद्गातृगणमात्रलक्षणा पूर्वतन्त्रे वर्णिता। तद्वदिह ब्रह्मक्षत्रयोरोदनशब्दमुख्यार्थत्वासंभवेऽपि भोज्यत्वभोग्यत्वरूपान्तरङ्गाकारस्यैव लक्षणयाऽपि ग्रहणं युक्तम्। न त्वत्यन्तबहिरङ्गस्य विनाश्यत्वाकारस्य येन निखिलचराचरसंहर्ता परमात्माऽत्र वाक्ये प्रतीयेतेति चेदुच्यते। यद्यपि विनाश्यत्वं साधारणाकारस्तथाऽपि मृत्युर्यस्योपसेचनमिति वाक्यशेषानुरोधात्साधारणोऽपि गौण्या वृत्त्या लक्षयितुमुचितः। ननु सेचनशब्दापेक्षयौदनशब्दस्य मुख्यत्वादोदनशब्दस्वारस्यानुरोधेन साधारणाकाररूपभोग्यत्वे लक्षिते जघन्यमुपसेचनपदमबाधकत्वाभिप्रायेण कथं

चिन्नीयताम् । अतश्च यो ब्रह्मक्षत्रभोक्ता यस्य च मृत्युरबाधकः सोऽस्मिन्मन्त्रे प्रतिपाद्यते । भोक्तृत्वं च जीवस्यैवेति स एवास्मिन्मन्त्रे प्रतिपाद्यतामिति चेदुच्यते । उपसेचनत्वेन रूपितस्य मृत्योरोदनत्वरूपितेन ब्रह्मक्षत्रशब्दितेन दध्यन्नवत्प्रतीतसंबन्धस्य सर्वात्मना बाधप्रसङ्गात् । न हि यस्य ब्रह्म क्षत्रं च भोग्यं यस्य च मृत्युरबाधक इत्युक्तेर्मृत्योर्ब्रह्मक्षत्रस्य च संबन्धः प्रतीयते । अत उपसेचनशब्दस्यौदनशब्दापेक्षया जघन्यत्वेऽप्यबाधकस्वरूपसाधारणगुणं विहाय स्वयमद्यमानत्वे सत्यन्यादनहेतुत्वरूपासाधारणाकार एव ग्राह्यः । ततश्चैकवाक्यान्तर्गतचरमश्रुतोपसेचनपदानुसारेणौदनशब्देनापि विनाश्यत्वमेव लक्षणीयम् । स्वबुद्ध्युपस्थापनीयविशेषाकाररूपगुणग्रहणादप्येकवाक्यतापन्नपदान्तरोपस्थापितगुणग्रहणस्यैव बुद्धिलाघवेनैकवाक्यतासामर्थ्यानुरोधेन च न्याय्यत्वादित्यस्यार्थस्यात्राधिकरणे निर्णीतत्वादित्यलं पल्लवितेन ॥ २५ ॥

समाप्ता द्वितीया वल्ली ॥ २ ॥

---

क इत्था वेद यत्र स इत्यस्य दुर्ज्ञानत्वेऽत्रेत्थमास्त इत्यस्यार्थस्य दुर्बोधत्वेन वयं तदुपासने शक्ता इति मन्यमानं प्रत्युपास्योपासकयोरेकगुहानुप्रवेशेन परमात्मनः सूपास्यत्वाद्वयमप्युपासितुं शक्ता इति द्वाभ्यां मन्त्राभ्यां दर्शयति ऋतं पिबन्तावित्यादिना ।

ऋतं पिबन्तौ, सुकृतस्य लोके, गुहां प्रविष्टौ, परमे परार्ध्ये ।

सत्यपदवाच्यवश्यंभाविकर्मफलमनुभवन्तौ सुकृतसाध्ये लोके वर्तमानौ हृदयकुहरं प्रविष्टौ तत्रापि परमाकाशे परार्ध्ये परार्धं संख्याया उत्तरावधिस्तदर्हतीति परार्ध्यमुत्कृष्ट इत्यर्थः । तादृशे हार्दाकाशे वर्तमानौ ।

छायातपौ ब्रह्मविदो वदन्ति ।

छायातपशब्दाभ्यां ज्ञाज्ञौ लभ्येते । अज्ञशब्देन जीवनिर्देशस्य चायमभिप्रायः । उपास्योपासकयोरेकगुहावर्तित्वे तयोरेव प्राप्यप्राप्तृतया वक्तव्यतया प्राप्यस्य च तत्प्राप्तिसाधनरथत्वेन रूपिते शरीरेऽवस्थानं न युक्तम् । न हि रथेन प्राप्तव्यार्थो रथस्थो भवतीति शङ्का न कार्या । प्राप्यस्य परमात्मनस्तत्रावस्थितत्वेऽपि जीवस्य 'पराभिध्यानात्तु तिरोहितम्' [ ब्र०सू०३।२।५ ] इत्युक्तरीत्या परमात्मसंकल्पमूलकर्मरूपा-

विद्यावेष्टिततया तदनुभवलक्षणतत्प्राप्तेरभावेन प्राप्तृप्राप्ययोर्जीवपरयो रथत्वरूपितशरीरान्तवर्त्येकगुहावर्तित्वकथने नानुपपत्तिरिति ।

पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥

पञ्चाग्निशुश्रूषाशुद्धान्तःकरणास्त्रिणाचिकेताः । उक्तोऽर्थः । एवंभूता ब्रह्मविदो वदन्तीत्यर्थः । केवलपञ्चाग्नित्रिणाचिकेतानामीदृशपरमात्मप्रतिपादनसामर्थ्याद्ब्रह्मविदामेव पञ्चाग्नित्वत्रिणाचिकेतत्वे विशेषणे । अस्यमन्त्रस्य जीवपरमात्मपरत्वं सूत्रितम् । 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।' [ब्र० सू० १।२।११] इति । ननु कर्मफलभोगशून्यपरमात्मनि ऋतं पिबन्ताविति निर्दिष्टकर्मफलभोक्तृत्वासंभवात्सुकृतसाध्यलोकवर्तित्वगुहावच्छिन्नत्वयोः सर्वगते परस्मिन्ब्रह्मण्यसंभवात् । छायातपनिर्दिष्टतमःप्रकाशत्वयोरपि जीवपरमात्मपरत्वेऽसंभवात् । बुद्धिजीवपरत्वे तु तस्य सर्वस्याप्युपपत्तेः । कर्मफलभोगकरणे कर्तृत्वोपचारेण पिबन्ताविति निर्देशस्याप्युपपत्तेः । बुद्धिजीवपरत्वमेवास्य मन्त्रस्य युज्यत इति चेत् । एवमेव हि गुहां प्रविष्टाविति सूत्र आशङ्क्य संख्याश्रवणे सत्येकस्मिन्संप्रतिपन्ने द्वितीयाकाङ्क्षायां प्रतिपन्नजातिमुपजीव्य व्यक्तिविशेषपरिग्रहे बुद्धिलाघवाद्विजातीयपरिग्रहे जातिव्यक्तिबुद्धिद्वयापेक्षया गौरवात्संप्रतिपन्नजातीयपरिग्रहो युक्तः । लोकेऽप्यस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादिषु तथा दर्शनात् । तथा च ऋतपानलिङ्गावगतजीवस्य द्वितीयश्चेतनत्वेन तत्सजातीयः परमात्मैव ग्राह्यः । परमात्मनः प्रयोजककर्तृतया पिबन्ताविति निर्देशस्यापि संभवात्, अन्तःकरणे स्वतन्त्रकर्तृत्वप्रयोजककर्तृत्वयोरभावेन पिबन्ताविति निर्देशस्य सर्वथाऽप्यसंभवात्, सर्वगते ब्रह्मणि सुकृतसाध्यलोकवर्तित्वस्यापि संभवात् । अस्मिन्नेव प्रकरणे गुहाहितं गह्वरेष्ठमिति परमात्मनो गुहाप्रवेशश्रवणेन गुहां प्रविष्टावित्यस्याप्युपपत्तेः । छायातपशब्दाभ्यां किंचित्सर्वज्ञयोः प्रतिपादनसंभवाज्जीवपरमात्मपर्यवसायिमन्त्र इति समर्थितत्वान्न त्वदुक्तशङ्कावकाशः । "तयोरन्यः पिप्पलं स्वाद्वत्ति" [मु० ३।१।१] इति स त्वामिति पैङ्गिरहस्यब्राह्मणानुसारेण द्वासुपर्णेति मन्त्रस्य बुद्धिजीवपरत्वात् । 'इयदामननात्' [ब्र०सू०३।३।३४] इत्यधिकरणे ऋतं पिबन्ताविति मन्त्रस्य द्वासुपर्णेति मन्त्रैकार्थस्य प्रतिपादितत्वादयमपि मन्त्रो बुद्धिजीवपर इत्यस्याः शङ्कायाः सूत्रकृतैव निराकृतत्वान्नास्माभिः संनह्यते । किं च जीवे गुहाप्रवेशस्य बुद्ध्युपाधिकतया

स्वतः प्रवेशवत्या बुद्ध्या सह जीवस्य गुहां प्रविष्टाविति गुहाप्रवेशवर्णनं न संगच्छते। उपष्टम्भकाधीनगुरुत्वशालिनि सुवर्णे गुरुसुवर्णमिति व्यवहारसंभवेऽप्युपष्टम्भकसुवर्णे गुरुणी इति व्यवहारस्यादर्शनात्। अत एव परपक्षे सूत्रानुसारेणास्य मन्त्रस्य जीवपरमात्मपरतया कृतं योजनान्तरमप्यनुपपन्नम्। 'अनेन जीवेनात्मनाऽनुप्रविश्य' [ छा० ६। ३। २] इति श्रुत्यनुसारेण परमात्मनो जीवभावेनानुप्रवेशेऽपि परमात्मरूपेणानुप्रवेशाभावाज्जीवपरमात्मानौ गुहां प्रविष्टाविति निर्देशानुपपत्तेः। जीवभावेन ब्रह्मणः संसारमभिप्रेत्य ब्रह्म संसरतीति व्यवहारसत्त्वेऽपि जीवब्रह्मणी संसरत इति व्यवहारासंभवात्। 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' [ नृ० सिं० ता० ९ ] कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।

इति वचनानुसारेण परिगृहीतेऽविद्याया अन्तःकरणस्य वा जीवोपाधिकत्वमिति पक्षद्वयेऽपि नाविद्यान्तःकरणयोः प्रतिबिम्बोपाधित्वं युज्यते। स्वच्छद्रव्यप्रतिहतपरावृत्तनायनरश्मिगृह्यमाणस्यैव प्रतिबिम्बशब्दार्थतया चाक्षुषस्य चैतन्यस्य प्रतिबिम्बत्वासंभवेनाविद्याप्रतिबिम्बोऽन्तःकरणप्रतिबिम्बो वा जीव इत्याश्रयणायोगादविद्यावच्छिन्नोऽन्तःकरणावच्छिन्नो वा जीव इति पक्षद्वयमेव परिशिष्यते। तत्र च हृदयगुहायामविद्यान्तःकरणाभ्यामवच्छिन्नत्वेनानवच्छिन्नपरमात्मनो गुहाप्रवेशवर्णनश्रुतेर्वाऽन्तर्यामिब्राह्मणस्य वा नाञ्जस्यमित्यलमतिचर्चया। प्रकृतमनुसरामः॥ १॥

य: सेतुरीजानानाम्।

यज्वनां य आधारभूतः कर्मफलप्रद इत्यर्थः। ईजानानामिति कानजन्तः शब्दः।

अक्षरं ब्रह्म यत्परम्।

यन्निर्विकारं परं ब्रह्म।

अभयं तितीर्षतां पारम्।

संसारसागरं तितीर्षतां निर्भयं दृढं तीरम्।

नाचिकेतꣳ शकेमहि॥ २॥

नाचिकेताग्निप्राप्यमुपासितुं शक्ताः स्मेत्यर्थः। शकेर्व्यत्ययेन शप्।

नाचिकेतं शकेमहीत्यस्य मन्त्रखण्डस्य तथैव भाष्यकृता व्याख्यातत्वात्। अतो दुरुपास्यत्वबुद्ध्या न भेतव्यमिति भावः ॥ २ ॥

आत्मानं रथिनं विद्धीत्यादिना सोऽध्वनः पारमाप्नोतीत्यन्तेन संसाराध्वपारभूतवैष्णवपरमपदप्राप्तौ परिकरमुपादिशन्प्राप्तृस्वरूपमुपदिशति—

आत्मानꣳ रथिनं विद्धि ।

शरीराधिष्ठातारं रथिनं विद्धि ।

शरीरꣳ रथमेव तु ।

स्पष्टोऽर्थः ।

बुद्धिं तु सारथिं विद्धि ।

बुद्धिशब्दिताध्यवसायाधीनत्वाद्देहप्रवृत्तेस्तस्याः सारथित्वमिति भावः

मनः प्रग्रहमेव च ॥ ३ ॥

प्रग्रहो रशना ॥ ३ ॥

इन्द्रियाणि हयानाहुः ।

स्पष्टोऽर्थः ।

विषयाꣳस्तेषु गोचरान् ।

तेष्विन्द्रियेषु हयत्वेन निरूपितेषु गोचरान्मार्गाञ्छब्दादिविषयान्विद्धीत्यर्थः ।

रथसारथिहयप्रग्रहत्वेन निरूपितानां शरीरेन्द्रियमनोबुद्धीनामभावे रथित्वेन रूपितस्योदासीनस्याऽऽत्मनो गमनरूपलौकिकवैदिकक्रियाकर्तृत्वमेव नास्तीत्येतत्सुप्रसिद्धत्वेन दर्शयति—

आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

आत्मशब्दो देहपरः । मनःशब्दस्तु तत्कार्यबुद्धेरप्युपलक्षकः । पूर्वमन्त्रे बुद्धेरपि सारथित्वेन निर्दिष्टत्वात् । भोक्ता कर्तृत्वभोक्तृत्वादिमानित्यर्थः । न हि केवलस्याऽऽत्मनः कर्तृत्वं भोक्तृत्वं वाऽस्तीति भावः ॥४॥

शरीरादे रथत्वादिरूपणस्य प्रयोजनमाह—

यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

यस्तु विज्ञानवान्भवति युक्तेन मनसा सह ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

लोके हि समीचीनसारथिप्रग्रहवतोऽश्वा वशीकृता भवन्ति । एवं सारथिप्रग्रहत्वेन रूपितयोर्विज्ञानमनसोः सामीचीन्येऽश्वत्वेन रूपितानीन्द्रियाणि वश्यानि भवन्ति नाऽन्यथेत्यर्थः ॥ ५ ॥ ६ ॥

हयत्वेन रूपितानामिन्द्रियाणां वशीकरणतदभावयोः प्रयोजनं दर्शयति मन्त्रद्वयेन—

यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥
यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥

अमनस्कोऽनिगृहीतमना अत एवाशुचिः सर्वदा विपरीतचिन्ताप्रवणत्वादित्यर्थः । न केवलं जिगमिषितप्राप्त्यभावमात्रं प्रत्युत गहनं संसारकान्तारमेव प्रापयतीत्यर्थः ॥ ७ ॥ ८ ॥

किं तत्पदमित्याकाङ्क्षायां तत्पदं दर्शयन्नुपसंहरति—

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
स तु तत्पदमप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥

समीचीनविज्ञानमनःशाली संसाराध्वपारभूतं परमात्मस्वरूपं प्राप्नोतीत्यर्थः ॥ ९ ॥

वशीकार्यत्वाय रथादिरूपितेषु शरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ११ ॥

अस्य मन्त्रद्वयस्यार्थो भगवता भाष्याकृतानुमानिकाधिकरणे [ब्र० सू० १।४।१] उक्तः । इत्थं हि तत्र भाष्यम् । तेषु रथादिरूपितशरीरादिषु

यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्त इन्द्रियेभ्यः परा इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वे पराः । वश्येन्द्रियस्यापि विषयसंनिधाविन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योऽपि परं प्रग्रहरूपितं मनः । मनसि विषयप्रवणे विषयासंनिधानस्याप्यकिंचित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा । तस्या अपि रथित्वेन रूपित आत्मा कर्तृत्वेन प्राधान्यात्परः सर्वस्याऽऽत्मेच्छायत्तत्वात् । आत्मैव महानिति च विशेष्यते। तस्मादपि रथरूपितं शरीरपरम् । तदायत्तत्वाज्जीवस्य सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषो यथोक्तस्याऽऽत्मपर्यन्तस्य तत्संकल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितयोपासकस्यापि प्रयोजकः । 'परात्तु तच्छ्रुतेः'[ब्र० सू० २।३।४१]इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव । तदिदमुच्यते 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति। तथा चान्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्' [बृ०माध्य०३।७।३०] इत्यादिभिः सर्वं साक्षात्कुर्वन्सर्वं नियमयतीत्युक्त्वा नान्योऽतोऽस्ति द्रष्टेति नियन्त्रन्तरं निषिध्यते । भगवद्गीतासु च ।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ इति

[ अ० १८ श्लो० १४ ] इति ।

दैवमत्रपुरुषोत्तम एव ।

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
[ अ० १५ श्लो० १५ ] इति वचनात् ।

तस्य च वशीकरणं तच्छरणागतिरेव । यथाऽऽह—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया [ अ०१८।६१ ]
तमेव शरणं गच्छ [ अ०१८।६२ ] इति ।

तदेवमात्मानं रथिनं विद्धीत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादय इन्द्रियेभ्यः परा ह्यर्था इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति भाषितम्॥१०॥११॥

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥

सर्वेषु भूतेष्वात्मतया वर्तमानोऽसौ गुणत्रयमायातिरोहितत्वेनाजितबाह्यान्तःकरणानां न यथावत्प्रकाशते । अग्र्ययैकाग्र्ययुक्तया बाह्याभ्यन्तरव्यापाररहितया सूक्ष्मार्थविवेचनशक्तया सूक्ष्मदर्शनशीलैर्दृश्यत इत्यर्थः ॥ १२ ॥

बाह्याभ्यन्तरकरणव्यापारराहित्यप्रकारमध्यात्मयोगाधिगमेनेति निर्दिष्टजीवस्वरूपज्ञानप्रकारं दर्शयति । यच्छेद्वाङ्मनसी प्राज्ञ इत्यादिना । इमं मन्त्रं प्रस्तुत्येत्थं हि भाष्यकृता । हयादिरूपितानामिन्द्रियादीनां वशीकरणप्रकारोऽयमुच्यते—

यच्छेद्वाङ्मनसी प्राज्ञः ।

वाचं मनसि नियच्छेत् । वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः । वाक्शब्दे द्वितीयायाः सुपां सुलुगित्यादिना लुक् । मनसी इति सप्तम्यां छान्दसो दीर्घः ।

तद्यच्छेज्ज्ञान आत्मनि ।

तत्मनो बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः ।

ज्ञानमात्मनि महति नियच्छेत् ।

बुद्धिं कर्तरि महत्यात्मनि नियच्छेत् ।

तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥

इति तं कर्तारं परस्मिन्ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थ इति भाषितम् । विवृतं च श्रुतप्रकाशिकायाम् । वाचो मनसि नियमनं मनोननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसो बुद्धौ नियमनं व्यवसायानुगुणप्रवृत्तितापादनम् । बुद्धिश्चार्थेषु हेयताध्यवसायरूपा तस्या बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम् । शान्ते स्वत ऊर्मिषट्कप्रतिभटे शान्त आत्मनि महत आत्मनो जीवस्य

नियमनं नाम तच्छेषताप्रतिपत्तिरिति । आत्मशब्दस्य पुंलिङ्गतच्छब्देन निर्देष्टव्ये छान्दसत्वाल्लिङ्गव्यत्ययः । ननु भाष्ये ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थ इत्युक्तिरयुक्ता । अव्यावर्तकत्वादात्मनि वर्तमान इति विशेषणस्याऽऽत्मन्यवर्तमानज्ञानस्यैवाभावात् । न च तद्यच्छेज्ज्ञान इत्येतावत्युक्त आत्मरूपज्ञानभ्रान्तिः स्यात् । अतो ज्ञान आत्मनीत्युक्तमिति वक्तुं शक्यम् । तथासति तस्या एव भ्रान्तेः सामानाधिकरण्ययोजनया दृढीकरणप्रसङ्गात् । न ह्यात्मनीत्यनेनाऽऽत्मभ्रान्तिर्व्युदस्यते । न चाऽऽत्मनि वर्तमान इति भाष्यस्याऽऽत्मनि विषयविषयिभावलक्षणसंबन्धेन वर्तमान इत्यर्थः । आत्मविषयकज्ञान इति यावत् । अतो व्यावर्तकतया न वैयर्थ्यदोष इति वाच्यम् । तथा सति ज्ञानमात्मनि महति नियच्छेदित्यस्य वैयर्थ्यापातात् । तदर्थस्यापि तेनैव सिद्धेरिति चेदुच्यते । अयमभिप्रायो भाष्यकारस्य तद्यच्छेज्ज्ञान आत्मनीत्यत्राऽऽत्मनीति विषयसप्तमी तच्चाऽऽत्मविषयकं ज्ञानमात्मोपादेयस्तदतिरिक्ता अर्था हेया इत्येवंरूपम् । तच्चार्थेषु हेयताध्यवसायरूपा बुद्धिरिति श्रुतप्रकाशिकायां व्यक्तम् । अस्य चाऽऽत्मानात्मविषयकाहेयहेयताध्यवसायरूपस्य ज्ञानस्य महत्यात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनमिति तत्रैव श्रुतप्रकाशिकायामुक्तत्वात् । वाक्यद्वयस्यापि सप्रयोजनतया तदुक्तवैयर्थ्यशङ्कानवकाश इति ॥ १३ ॥

एवं वशीकरणप्रकारमुपदिश्याधिकारिपुरुषानभिमुखी करोति—

उत्तिष्ठत जाग्रत ।

आत्मज्ञानाभिमुखा भवताज्ञाननिद्रायाः क्षयं कुरुत ।

प्राप्य वरान्निबोधत ।

वराञ्श्रेष्ठानाचार्यानुपसंगम्याऽऽत्मतत्त्वं निबोधत । यद्वोपासिताद्भगवतो ब्रह्मविद्भ्यो वा देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानित्येवंरूपान्वरान्प्राप्य ज्ञेयमात्मतत्त्वं निबोधत नोदासितव्यमिति भावः ।

क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥ १४ ॥

ज्ञानिनस्तदात्मतत्त्वं दुर्गमं पन्थानं वर्णयन्ति तत्कस्य हेतोः । यत आत्मतत्त्वं क्षुरस्याऽऽयुधविशेषस्य धाराऽग्रं निशिता तीक्ष्णा दुरत्ययाऽनतिक्रमणीया । तीक्ष्णक्षुराग्रे संचरतः पुंसो यथा कियत्यप्यनवधान

आत्मनाशो भवति । एवमिहाऽऽत्मस्वरूपावगतिदशायां स्वल्पेऽप्यनव-धानापराध-आत्मनाशो भवतीति भावः ॥ १४ ॥

उपसंहरति—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।

अत्र नित्यमित्येतदशब्दमित्यादौ प्रत्येकं संबध्यते । अशब्दत्वादिवि-शादेव कालवदव्ययम् । अथवापचयशून्यमित्यर्थः ।

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥१५॥

महत इत्यनेनाऽऽत्मनि महति नियच्छेदिति पूर्वमन्त्रनिर्दिष्टो जीवो गृह्यते । ध्रुवं स्थिरं निचाय्य दृष्ट्वा दर्शनसमानाकारोपासनेन विषयीकृत्ये-त्यर्थः । मृत्युमुखादिति भीषणात्संसारादित्यर्थः ॥ १५ ॥

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ॥

नाचिकेतसा प्राप्तं नाचिकेतम् । मृत्युप्रोक्तं मृत्योः प्रवक्तृत्वमेव न स्वतन्त्रवक्तृत्वम् । अत एव सनातनं, अपौरुषेयत्वात्प्रवाहरूपेण नित्य-मित्यर्थः ।

उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥

स्पष्टोऽर्थः ॥ १६ ॥

य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ॥

ब्रह्मसंसदि ब्राह्मणसमाजे ।

प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते

तदानन्त्याय कल्पत इति ॥ १७ ॥

प्रयतः शुद्धः ॥ १७ ॥

तृतीया वल्ली समाप्ता ॥

इति काठकोपनिषदि प्रथमोऽध्यायः ॥ १ ॥

---

उत्तिष्ठत जाग्रतेति प्रोत्साहनेऽप्यात्मस्वरूपविमुखान्पश्यञ्शोचति ।

पराञ्चि खानि व्यतृणत्स्वयंभूः ॥

खानीन्द्रियाणि पराञ्चि परानञ्चन्तीति पराञ्चि परप्रकाशकानि न त्वात्मप्रकाशकानि । तत्र हेतुं वदञ्शोचति । व्यतृणत्स्वयंभूः । स्वतन्त्र ईश्वर इमानि खानि हिंसितवान् । तृह[तृद]हिंसायामिति-

धातुः। यद्वा धातूनामनेकार्थत्वात्। परार्थप्रकाशकानीन्द्रियाणि सृष्टवानित्यर्थः।

तस्मात्पराङ्पश्यति नान्तरात्मन् ॥

पराक्पराच इति यावत्। पराग्रूपाननात्मभूतान्पश्यन्त्युपलभन्ते। अन्तरात्मानं नेत्यर्थः। यद्वा पराङ्पराङ्मुखानि भूत्वा विषयानेव पश्यन्तीत्यर्थः। पराङ्पश्यतीति पाठे लोकाभिप्रायमेकवचनम्।

ईदृशेऽपि लोकस्वभावे नद्याः प्रतिस्रोतः प्रवृत्त इव कश्चित्पुरुषो धौरेयः प्रत्यगात्मप्रवणोऽप्यस्तीत्याह—

कश्चिद्धीरः प्रत्यगात्मानमैक्षत् ॥

प्रत्यञ्चमात्मानं पश्यतीत्यर्थः। छान्दसं परस्मैपदम्। अत एव वर्तमानार्थे लङुपपत्तिश्च।

आवृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

चक्षुःशब्द इन्द्रियमात्रपरः। स्वस्वविषयव्यावृत्तेन्द्रियो मुमुक्षुरित्यर्थः ॥ १ ॥

पराचः कामाननुयन्ति बालाः ॥

अल्पप्रज्ञा बाह्यान्काम्यमानान्विषयानेवावगच्छन्ति।

ते मृत्योर्यन्ति विततस्य पाशम् ॥

विस्तीर्णस्य संसारस्य बन्धनं यान्तीत्यर्थः। यद्वा विततस्य सर्वत्राप्रतिहताज्ञस्य मृत्योर्यमस्य पाशं यान्तीत्यर्थः ॥

अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

अथशब्दः प्रकृतविषयार्थान्तरपरिग्रहे। धीमन्तः प्रत्यगात्मन्येव ध्रुवममृतत्वं विदित्वेह संसारमण्डलेऽध्रुवेषु पदार्थेषु कमपि न प्रार्थयन्ते प्रत्यक्तत्त्वज्ञस्य सर्वं जिहासितव्यमिति भावः। परात्मनः सर्वजीवगताहंतास्पदत्वेन मुख्याहमर्थत्वात्प्रत्यक्त्वमस्तीति द्रष्टव्यम् ॥ २ ॥

येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान् ॥

मैथुनान्मिथुननिमित्तकसुखविशेषानित्यर्थः।

एतेनैव विजानाति किमत्र परिशिष्यते ॥

निःशेषं येनैव साधनेन जानातीत्यर्थः। 'तद्देवा ज्योतिषां ज्योतिः'

[ बृ० ४।४।१६ ] इति रूपादिप्रकाशकानामिन्द्रियाणां तदनुगृहीतानामेव कार्यजनकत्वादिति भावः ।

एतद्वै तत् ॥ ३ ॥

तत्पूर्वं प्राप्यतया निर्दिष्टं विष्णोः परमं पदम् । एतद्वै, एतदेवैतन्मन्त्रप्रतिपाद्याऽऽत्मस्वरूपमेवेत्यर्थः ॥ ३ ॥

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।

सकलं स्वाप्नप्रपञ्चं जाग्रत्प्रपञ्चं च मनआदीन्द्रियभावमापन्नेन येन परमात्मना लोकः पश्यतीत्यर्थः ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥

तमिति शेषः । उक्तोऽर्थः ॥ ४ ॥

य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् ॥
ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥

इदमिति लिङ्गव्यत्ययश्छान्दसः । इमं मध्वदमृतं पिबन्ताविति निर्दिष्टं कर्मफलभोक्तारं जीवात्मानं गुहां प्रविष्टावित्युक्तरीत्या तस्यान्तिके कालत्रयवर्तिचिदचिदीश्वरं च यो वेद तं दुष्कृतकारिणमपि न निन्देदित्यर्थः । गुप्तिज्किद्भ्यः सन्नित्यत्र जुगुप्साशब्दो निन्दार्थक उक्तः । जुगुप्साविरामप्रमादार्थानामिति तत इति पञ्चमी । एतद्वै तदिति पूर्ववत् ॥ ५ ॥

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ॥
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत ॥

अत एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

इतिस्मृत्युक्तरीत्याऽद्भ्य उपादानेभ्यो व्यष्टिसृष्टेः पूर्वं योऽजायत तं तपसः संकल्पमात्रादेव पूर्वं जातम् । "यो देवानां प्रथमं पुरस्तात्" "विश्वाधिको रुद्रो महर्षिः" [ श्वे० ३ । ४ ] "हिरण्यगर्भं पश्यत जायमानम्" [श्वे० ४।१२] इति श्रुत्युक्तरीत्या प्रथमं जातं गुहां प्रविश्य तिष्ठन्तं हृदयगुहां प्रविश्य वर्तमानं भूतेभिर्भूतैर्देहेन्द्रियान्तःकरणादिभिरुपेतं चतुर्मुखमयं सकलजगत्स्रष्टा स्यादिति कटाक्षेणैक्षतेत्यर्थः ।

एतद्वै तत् ॥ ६ ॥

उक्तोऽर्थः ॥ ६ ॥

या प्राणेन संभवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥

अयं च मन्त्रो गुहां प्रविष्टौ [ ब्र० सू० १ । २ । ११ ] इति सूत्रे भगवता भाष्यकृता व्याख्यातः । इत्थं हि भाष्यकृता कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन संभवति प्राणेन सह वर्तते । देवतामयीन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती हृदयपुण्डरीककुहरवर्तिनी । भूतेभिर्व्यजायत पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायत इति भाषितम् ।

एतद्वै तत् ॥ ७ ॥

तत्तदात्मकमित्यर्थः । अत्रैव प्रकरणे "ब्रह्मजज्ञं देवमीड्यं विदित्वा" [ का० १ । १७ । ] इत्यत्र देवमित्यस्य परमात्मात्मकमिति व्याख्यातत्वात्, क्षेत्रज्ञं चापि मां विद्धीत्येतदुपबृंहणगीतावचनेऽपि मां मदात्मकमिति भाष्यकृतैव व्याख्यातत्वात्, अपृथक्सिद्धविशेषणवाचिशब्दस्य विशेष्य इवापृथक्सिद्धविशेष्यवाचिशब्दस्यापि विशेषणे निरूढत्वात्तदात्मकमित्यर्थो युक्त इति द्रष्टव्यम् ॥ ७ ॥

अरण्योर्निहितो जातवेदाः ।

अरण्योरधरोत्तरारण्योः स्थितोऽग्निः ।

गर्भ इवोत्सुभृतो गर्भिणीभिः ।

गर्भिणीभिः पानभोजनादिना सुभृतो गर्भ इव निहित इति पूर्वेणान्वयः । उदित्यवधारणे ।

दिवे दिव ईड्यो जागृवद्भिः ।

अहन्यहनि जागरणशीलैरप्रमत्तैः स्तुत्यः ।

हविष्मद्भिर्मनुष्येभिरग्निः ।

आज्यादिहविःप्रदानप्रवृत्तैर्ऋत्विग्भिः स्तुत्योऽग्निः । अग्रनेताऽरण्यो-

एतद्वै तत् ॥ ८ ॥

एतदग्निस्वरूपं तत्पूर्वोक्तब्रह्मात्मकमित्यर्थः ।

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति। तं देवाः सर्वे अर्पिताः ॥

यस्माद्ब्रह्मणः सकाशात्सूर्य उदेति यत्र च लयमेति देवाः सर्वे तस्मिन्नात्मनि प्रतिष्ठिता इत्यर्थः ।

तदु नात्येति कश्चन ।

तत्सर्वात्मकं ब्रह्म कोऽपि नातिक्रामति छायावदन्तर्यामिणो दुर्लङ्घत्वादिति भावः ।

एतद्वै तत् ॥ ९ ॥

उक्तोऽर्थः ॥ ९ ॥

ननु परमात्मनः सर्वात्मत्वं न संभवति । अहमित्यहन्ताश्रयत्वेनानुसंधीयमानो ह्यात्मा स चाहमिहैवास्मीति देशान्तरव्यावृत्ततयाऽनुसंधीयते तस्य कथं सर्वदेशकालवर्तिसर्वपदार्थात्मभूतत्वमित्याशङ्क्याऽऽह—

यदेवेह तदमुत्र यदमुत्र तदन्विह ।

यदेव परमात्मतत्त्वमत्र लोकेऽहमित्यनुसंधीयमानतयाऽऽत्मभूतं तदेव लोकान्तरस्थानामप्यात्मभूतमित्यर्थः । ततश्चाऽऽत्मभेदो नास्तीत्यर्थः। अयमभिप्रायः। किं परमात्मतत्त्वविदामहमिहैवेति प्रतीतिः सर्वदेशकालवर्तिपदार्थात्मकत्वबाधकतयोपन्यस्यत उत तद्रहितानाम् । नाऽऽद्यः। तेषामहमिहैवेत्यादिप्रतीतेरेवाभावात् । प्रत्युताहं मनुरभवं सूर्यश्चेति सर्ववस्तुवर्तितयैवानुभवात् । न द्वितीयः । अतत्त्वविदामहंप्रतीतेर्जीवमात्रविषयत्वेन तत्र देशान्तरव्यावृत्तत्वप्रतीतेस्तदानीमप्रतीतपरमात्मनि सर्वदेशवर्तिपदार्थात्मत्वविरोधित्वाभावादिति ।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

इह परमात्मनि भेदमिव यः पश्यति स तु संसारात्संसारं प्राप्नोतीत्यर्थः ॥ १० ॥

नन्वस्माकं सर्वात्मभूतं परमात्मतत्त्वं कुतो नोपलभ्यत इत्यत्राऽऽह—

मनसैवेदमाप्तव्यम् ।

इदमात्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः ।

उक्तमेवार्थं दृढीकरणायाभ्यस्यति—

नेह नानाऽस्ति किंचन मृत्योः स मृत्युं
गच्छति य इह नानेव पश्यति ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य ।

कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुष उपासकशरीरेऽङ्गुष्ठपरिमाणः सन्नास्ते ।

न ततो विजुगुप्सते ।

ततो भूतभव्येश्वरत्वादेव वात्सल्यातिशयाद्देहगतानपि दोषान्भोग्यतया पश्यतीत्यर्थः । ननु 'प्राणाधिपः संचरति स्वकर्मभिः' [श्वे० ५।७] 'अङ्गुष्ठमात्रो रवितुल्यरूपः' [ श्वे० ५।८ ] ।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ।

इत्यादिश्रुतिस्मृतिष्वङ्गुष्ठमात्रत्वेन प्रतिपादितस्य जीवस्यैवास्मिन्मन्त्रे प्रतिपादनं किं न स्यात् । न च न तस्य भूतभव्येशानत्वादीति वाच्यम् । प्रथमश्रुतजीवलिङ्गानुरोधेन चरमश्रुतभूतभव्येशानत्वस्यापेक्षिकतया योजयितुं शक्यत्वादिति चेन्न । 'शब्दादेव प्रमितः' [ब्र० सू० १।३।२४] इत्यधिकरण एवमेव पूर्वपक्षं कृत्वा हृदयावच्छेदनिबन्धनाङ्गुष्ठपरिमाणस्य परमात्मन्यपि संभवात् । अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' [१६।३] इति तैत्तिरीयके । 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः' इति श्वेताश्वतरे [ ३।१३ ] चाङ्गुष्ठमात्रत्वस्य परमात्मन्यपि श्रवणात् । असंकुचितभूतभव्येशितृत्वस्यानन्यथासिद्धब्रह्मलिङ्गत्वादयं मन्त्रः परमात्मपर एवेति सिद्धान्तितत्वात् । यत्त्वत्र कैश्चिदुच्यते । अङ्गुष्ठमात्रत्वं जीवलिङ्गमेव । यथाप्यङ्गुष्ठमात्रः पुरुषो

मध्य आत्मनि तिष्ठतीति पूर्वार्धेन जीवमनूद्य, 'ईशानो भूतभव्यस्य' इत्यनेन परमात्मभावो विधीयत इति। तदसमञ्जसम्। तथाहि सति परमात्मन्यङ्गुष्ठमात्रत्वसंभावनाप्रदर्शकस्य 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' [ब्र० सू० १।३।२५] इति सूत्रस्यासंगतिप्रसङ्गात्। ननु नास्मिन्मन्त्रे जीवानुवादेन ब्रह्मभावो विधीयते। आराग्रमात्रतया प्रतिपन्नस्य जीवस्याङ्गुष्ठमात्रत्वे प्रमाणाभावादिति तटस्थशङ्कापरिहारार्थं जीवस्याङ्गुष्ठमात्रत्वसाधनाय प्रवृत्तमिदं सूत्रमितिचेत्। तथाऽऽश्रयणस्य क्लिष्टत्वात्। नन्वीश्वरः शर्व ईशान इति निघण्टुपाठेनेशानशब्दस्य देवताविशेषे रूढत्वाच्छब्दादेव प्रमित इति सूत्र ईशानो भूतभव्यस्येति शब्दादेव न तु भूतभव्यस्य सर्वस्येशितृत्वं कर्मवश्यजीवस्योपपद्यत इति भाष्यं व्याकुर्वद्भिर्व्यासार्यैरीशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात्, नात्र लिङ्गान्निर्णयः किं त्वीश्वरवाचिशब्दादेवेत्येवकाराभिप्राय इति व्याख्यातत्वात्, ईशानशब्दस्य श्रुतित्वाभ्युपगमात, तयैव चेशानशब्दश्रुत्या जीवव्यावृत्तिवदेव नारायणस्यापि व्यावर्तितत्वेन रुद्रपरत्वमेव स्यादिति चेन्न। योगरूढिमतः पदस्य संनिधावनयवार्थविशेषकपदान्तरसंनिधाने रूढ्यनुन्मेषस्य।

पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः।

इत्यादिषु दर्शनात्। तत्र हि सरोरुहपदावयवार्थसरोविशेषकाग्रपदोपादानेन सरोरुहपदरूढिभङ्गस्य दर्शनात्। इतरथा पद्मानीति पदानुपादानत्वापत्तेः। अत ईशानशब्दस्य न श्रुतित्वम्। एतत्स्वरसादेव व्यासार्यैरपि यथाश्रुतभाष्यानुगुण्येन यद्वेति पक्षान्तरस्याश्रितत्वादित्यलमतिचर्चया। प्रकृतमनुसरामः।

एतद्वै तत् ॥ १२ ॥

उक्तोऽर्थः ॥ १२ ॥

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः।

शुष्केन्धमानलवत्प्रकाशमान इत्यर्थः।

ईशानो भूतभव्यस्य स एवाद्य स उ श्वः।

अद्यतनपदार्थजातं श्वस्तनपदार्थजातं कालत्रयवर्तिपदार्थजातमपि तदात्मकमित्यर्थः।

एतद्वै तत् ॥ १३ ॥

पूर्ववत् ॥ १३ ॥

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।

पर्वतमूर्ध्नि वृष्टं प्रत्यन्तपर्वतेषु नानाभूततया पतित्वा पतित्वा धावति ।

एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥

एवं परमात्मगतदेवान्तर्यामित्वमनुष्यान्तर्यामित्वादिधर्मान्पृथगधिकरणनिष्ठान्पश्यन्पर्वतनिर्झरपातमनुकृत्य संसारकुहरे पततीत्यर्थः ॥ १४ ॥

सर्वत्रैकात्मकत्वज्ञानस्य फलमाह—

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।

एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

यथा शुद्धजले शुद्धजलं योजितं तत्सदृशमेव भवति न कथंचिद्विसदृशमेवमित्थं विजानतो मननशीलस्याऽऽत्माऽपि परमात्मज्ञानेन विशुद्धः सन्विशुद्धेन परमात्मना समानो भवतीत्यर्थः । गौतमेति प्राप्यवैभवं सूचयन्सहर्षं संबोधयति ।

समाप्ता प्रथमावल्ली ।

---

पुरमेकादशद्वारमजस्यावक्रचेतसः ।

अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥

जननादिविक्रियारहितस्य ऋजुबुद्धेर्विवेकिन आत्मन एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेतं शरीराख्यं पुरं भवति । पुरस्वामिनो यथा पुरं विविक्तं भवति तथा शरीरमपि स्वात्मनो विविच्य ज्ञातं भवति । अविवेकिनस्तु देह आत्मैव भवतीति भावः । अनुष्ठाय न शोचति । विविच्य जानन्देहानुबन्धिभिर्दुःखैः कामादिभिश्च विमुक्तो भवतीत्यर्थः । विमुक्तश्च विमुच्यते । जीवदशायामाध्यात्मिकादिदुःखरागद्वेषादिविमुक्त एव सन्भोगेन त्वितरे क्षपयित्वा संपद्यते' [ब्र०सू०४।१।१९] इति न्यायेन प्रारब्धकर्मावसानेऽर्चिरादिना विरजां प्राप्य प्रकृतिसंबन्धविमुक्तो भवतीत्यर्थः ।

एतद्वै तत् ॥ १ ॥

एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मकमेवेत्यर्थः ॥ १ ॥

पुनरप्यस्य सर्वात्मतामेव प्रथयति—

हꣳसः शुचिषद्वसुरन्तरिक्षसत् ।

हंसः सूर्यः । शुचौ ग्रीष्मर्तौ सीदतीति शुचिषत्तेजस्वीति यावत् । वासयतीति वसुर्वायुः । अन्तरिक्षसत्, अन्तरिक्षगतो वायुः ।

होता वेदिषदतिथिर्दुरोणसत् ।

वेद्यन्तवर्तमान ऋत्विग्विशेषोऽग्निर्वा । दुरोणं गृहं गृहागतोऽतिथिः ।

नृषद्वरसदृतसद्व्योमसत् ।

नृष्वात्मतया वर्तमानं, वरेषु देवेषु च तथा वर्तमानं, ऋते सत्यलोके सीदतीति ऋतसत्, व्योम्नि परमपदे वर्तमानं च प्रत्यक्तत्त्वम् ।

अब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥

अब्जा जलजाः । गोजा भूजाः । ऋतजा यज्ञोत्पन्नाः कर्मफलभूताश्च स्वर्गादय इति यावत् । यद्वा चिरकालस्थायितया ऋतशब्दिताकाशजा इत्यर्थः । अद्रिजाः पर्वतजाः । एतत्सर्वं बृहदृतमपरिच्छिन्नसत्यरूपब्रह्मात्मकमित्यर्थः ॥ २ ॥

ऊर्ध्वं प्राणमुन्नयति ।

सर्वेषां हृदयगतः परमात्मा प्राणवायुमूर्ध्वमुखमुन्नयति ।

अपानं प्रत्यगस्यति ।

अपानवायुमधोमुखं क्षिपति ।

मध्ये वामनमासीनम् ।

हृदयपुण्डरीकमध्य आसीनं वामनं वमनीयं भजनीयम् । अथ वा हृदयपुण्डरीकपरिमिततया ह्रस्वपरिमाणमित्यर्थः ।

विश्वे देवा उपासते ॥ ३ ॥

तं सत्त्वप्रकृतयः सर्वेऽप्युपासत इत्यर्थः ॥ ३ ॥

एवं परमात्मानमुपासीनस्य 'तस्य तावदेव चिरं यावन्न विमोक्षे' [ छा० ६ । १४ । २ ] इति श्रुत्युक्तरीत्या शरीरपात एवान्तरायो न किंचित्कर्तव्यं परिशिष्यत इत्याह—

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ॥

अस्योपासकस्य देहिनः शरीरस्थस्य शरीरप्रतिष्ठितस्य दृढशरीरस्येति यावत् । एवंभूतस्य वा विस्रंसमानस्य शिथिलीभवद्गात्रस्य वा देहाद्विमुच्यमानस्य म्रियमाणस्य वा किमत्र परिशिष्यते । कृतकृत्यत्वात्कर्तव्यं किमपि नावशिष्यत इति भावः ।

एतद्वै तत् ॥ ४ ॥

पूर्ववत् ॥ ४ ॥

तस्य सर्वप्राणिप्राणनहेतुत्वरूपं महिमानमाह—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन
इतरेण तु जीवन्ति ।

स्पष्टोऽर्थः ।

केनेतरेण जीवन्तीत्यत्राऽऽह—

यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

यदधीनं प्राणापानयोरपि जीवनं तदधीनमेव सर्वेषां जीवनमिति भावः ॥ ५ ॥

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।

गुह्यमतिरहस्यं सनातनं ब्रह्म ते पुनरपि प्रवक्ष्यामि । हन्तेति स्वगतमाश्चर्ये ।

यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥

हे गौतम, आत्मा मरणं मोक्षं प्राप्य यथा यत्प्रकारविशिष्टो भवति तथा पुनरपि मुमुक्षवे रागाद्यनुपहतायोपदेशयोग्याय तुभ्यं वक्ष्यामीत्यर्थः ॥ ६ ॥

अधिकारिविशेषनिर्देशपरेण हन्त त इत्यनेन सूचितमर्थं विवृणोति—

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।

अन्ये परमात्मतत्त्वश्रवणविमुखास्त्वद्विसदृशाः शरीरपरिग्रहाय ब्राह्मणादियोनिं प्रतिपद्यन्ते ।

स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥

अन्ये स्थावरभावमनुगच्छन्ति । स्वानुष्ठितयज्ञादिकर्मोपासनानतिक्रमणेन 'रमणीयचरणाः' [ छा० ५।१०।७ ] 'तं विद्याकर्मणी समन्वारभेते' [ बृ० ४।४।२ ] इत्यादिश्रुत्यनुरोधादिति भावः ॥ ७ ॥

एवं शिष्यं प्ररोचनयाभिमुखीकृत्य प्रकृतमनुसरति ।

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ॥

सर्वेषु सुप्तेषु जीवेषु । कामं कामं णमुलन्तमिदं संकल्प्य संकल्प्येत्यर्थः । न तु सर्वान्कामांश्छन्दतः प्रार्थयस्वेति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते । अयं चार्थः संध्याधिकरणे [ ब्र० सू० ३।३।१ ] भाष्यश्रुतप्रकाशिकयोः स्पष्टः संकल्प्य संकल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्तीत्यर्थः ।

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।

तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ ८ ॥

तदेव प्रकाशकं तदेवानन्याधीनममृतमुच्यत इत्यर्थः । शिष्टं स्पष्टम् । नित्यमुक्तानाममृतत्वसत्त्वेऽपि निरुपाधिकामृतत्वाभावात्तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम् । तेनामृतान्तरनिषेधान्मुक्तपरमात्मनोरभेदप्रत्याशा प्रत्युक्ता । अत्रत्यामृतशब्दस्य निरुपाधिकामृतवाचित्वात् ॥ ८ ॥

एक एवाऽऽत्मा सर्वेषामहमर्थतयाऽऽस्त इत्यस्यार्थस्य दुर्बोधत्वात्तद्दृढीकरणाय पुनरप्युपदिशति–

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ॥

यथैकस्तेजोधातुस्त्रिवृत्करणकृतव्याप्त्याऽण्डान्तर्गतलोके प्रविष्टः सन्रूपं रूपं रूपे रूपे भौतिकव्यक्तिषु वीप्सायां द्विर्वचनम् । प्रतिरूपं प्रत्युत्तं रूपं यस्य स तथोक्तः । सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसंक्रान्तरूपत्वात्प्रतिरूपमस्तीति द्रष्टव्यम् ।

7

एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

तथैक एव सन्परमात्मा प्रतिवस्तुसंक्रान्तान्तर्यामिविग्रहो बहिश्च व्याप्नोतीत्यर्थः ॥ ९ ॥

उदाहरणान्तरमाह—

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥

पूर्ववत् ॥ १० ॥

आत्मत्वाविशेषेऽपि जीवात्मवद्दोषाः परमात्मनि न भवन्तीत्येतत्सदृष्टान्तमाह—

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥

'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' [ बृ० ५।५।२ ] 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् [ ऐ० अ० १ ख० २ ] इति श्रुत्यनुसारेण यथा सूर्यश्चक्षुरधिष्ठातृतया तदन्तर्गतोऽपि बहिर्निर्गतैश्चक्षुर्मलादिभिर्न स्पृश्यते तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोऽपि तद्गतैर्दोषैर्न स्पृश्यते । तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तग्राह्यत्वात्, विलक्षणत्वादित्यर्थः ॥ ११ ॥

एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा
यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

एकः समाभ्यधिकरहितः । वश इच्छा सोऽस्यास्तीति वशी जगद्वशे वर्तत इत्युक्तरीत्या वशवर्तिप्रपञ्चक इत्यर्थः ।

इमौ स्म मुनिशार्दूल किंकरौ समुपस्थितौ ।

इत्युक्तरीत्या भक्तवश्य इति वाऽर्थः । एकं बीजं तमः 'परे देवे मनस्येकी भवति' [ प्र०४।२ ] इति श्रुत्युक्तरीत्या स्वेनैकीभूताविभागावस्थं तमोलक्षणं बीजं महदादिबहुविधप्रपञ्चरूपेण यः करोति तं य आत्मनि तिष्ठन्नित्युक्तरीत्या स्वान्तर्यामिणं ये पश्यन्ति तेषामेव मुक्तिरित्यर्थः ॥ १२ ॥

नित्योऽनित्यानां चेतनश्चेतनानामेको
बहूनां यो विदधाति कामान् ॥

नित्यश्चेतन एक एव सन्बहूनां नित्यानां चेतनानामपेक्षितानर्थाननायासेन प्रयच्छति ।

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां
शान्तिः शाश्वती नेतरेषाम् ॥१३॥

स्पष्टोऽर्थः ॥ १३ ॥

एवमुक्ते शिष्य आह—

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं
नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥

तदलौकिकं परमानन्दरूपं ब्रह्म करतलामलकवदपरोक्षं भवादृशा निष्पन्नयोगा मन्यन्ते । भवादृशाः साक्षात्कर्तुं शक्नुवन्तीत्यर्थः । कथं रूपादिहीनब्रह्मग्रहणासमर्थमानसोऽहं विजानीयाम् । तत्किं दीप्तिमत्तया भासते तत्रापि विस्पष्टं प्रकाशते, उत तेजोन्तरसंवलनान्न विस्पष्टं प्रकाशत इति प्रश्नः ॥ १४ ॥

परमात्मनो योग्युगालम्बनाय 'आदित्यवर्णं तमसः परस्तात्' [श्वे० ३ । ८] । सदैकरूपरूपायेति प्रमाणप्रतिपन्नगुहाश्रयदिव्यमङ्गलविग्रहोऽस्ति तद्विशिष्टः परमात्मा विभाति सर्वातिशायिदीप्तिमानित्याह—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य
भासा सर्वमिदं विभाति ॥ १५ ॥

अयं च मन्त्रः 'ज्योतिर्दर्शनात्' [ब्र० सू० १।३।४० ] इति सूत्रे सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यत इति भाष्येण विवृतः । इदं च भाष्यम् । न तत्र सूर्य इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह—सर्वतेजसां छादकमिति उत्तरार्धस्य

पूर्वपादार्थमाह—सर्वतेजसां कारणभूतमिति । अनुभानं पश्चाद्भानं तेन कार्यकारणभावः सिद्धः । पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह–अनुग्राहकमिति । 'यस्याऽऽदित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणमिति व्यासार्यैर्विवृतम् । तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वं प्रथमार्धार्थः । तेजोन्तरोत्पत्तौ तदुपादानद्रव्यानुग्राहकत्वरूपं निमित्तत्वं तृतीयपादार्थः । चाक्षुषरश्म्यनुग्राहकचन्द्रादेरिवोत्पन्नस्यापि तेजसः स्वसंबन्धेन स्वकार्यकरणसामर्थ्याधायकत्वलक्षणानुग्राहकत्वं चतुर्थपादार्थ इत्यप्यर्थस्तत्रैव व्यक्तः । अधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमध्यस्तप्रपञ्चस्य तृतीयपादार्थ इति परैरुच्यते तदयुक्तम् । तथा हि सति भान्तमिति कर्त्रर्थशतृप्रत्ययस्य शिष्यज्ञानं प्रकाशत इतिवद्भेदेऽपि कथंचित्संभवेऽप्यनुभातीत्यनुशब्दस्यायोगात् । न हि देवदत्तगमनक्रियाव्यतिरिक्तगमनक्रियाशून्ये तिष्ठति यज्ञदत्ते गच्छन्तं देवदत्तं यज्ञदत्तोऽनुगच्छतीति प्रयोगो दृष्टचरः । ननु वह्निमेव दहन्तमयोऽनुदहतीति प्रयोगो दृष्टचर इतिचेन्न । अयसः पृथग्दग्धृत्वाभावं निश्चिन्वतस्तत्प्रतिपिपादयिषया तादृशप्रयोगस्य संप्रतिपन्नत्वाभावात् । ननु तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वमिति भवदभिमतार्थोऽपि न युज्यते । तदीयदीप्तिसाक्षात्कारवतामपि मुक्तानां तेजोन्तर्दीप्तिसाक्षात्कारदर्शनेन सजातीयसंवलनाधीनाग्रहणलक्षणाभिभवस्याभावादिति चेदुच्यते । बद्धविषयमेवैतत् । बद्धानां तत्साक्षात्कारासक्तेरिदं कथमिति चेन्न । बद्धानामेवार्जुनादीनां तत्साक्षात्कारदर्शनात् । यद्वा कालिदासकवौ परिगण्यमान इतरः कुकविरकविरितिवद्भाति । ब्रह्मणि परिगण्यमाने सूर्यादितेजोन्तरं न भाति । अतस्तदेव ब्रह्मातिभास्वररूपशालीति पूर्वार्धार्थः । तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वमिति व्यासार्यवचनस्याप्ययमेवार्थः । अमुमेवार्थमितरतेजसां स्वरूपोत्पत्तौ फलजनने च परमात्मानुग्रहसापेक्षत्वप्रदर्शकेन तमेव भान्तमित्युत्तरार्धेन प्रथयतीति न दोष इत्येतदवगन्तव्यम् । यद्वा पूर्वार्धस्य यथाश्रुत एवार्थः । नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमानेन भातीति प्रत्यक्षविरुद्धं कथमभिधीयत इत्यत्राऽऽह "तमेव भान्तमनुभाति" इति । इदं च परिदृश्यमानमादित्यादीनां भास्वररूपं न स्वाभाविकमपि तु परमात्मदत्तं तदीयमेव तेजः । गीतं च भगवता—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् [अ० १५।१२]इति ।

विवृतं चैतद्भगवता भाष्यकृता–अखिलजगतो भासकमेतेषामादित्यादीनां यत्तेजस्तन्मदीयं तेजस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धीति अतो याचितकमण्डितपुरुषतुल्यानामेतेषां भास्वररूपशालिनां न भातीति व्यपदेशो युज्यत इति भावः ॥ १५ ॥

द्वितीया वल्ली समाप्ता ।

---

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।

अयं च मन्त्रखण्ड ऊर्ध्वमूलमधःशाखमिति गीताव्याख्यानावसरे भगवता भाष्यकृता व्याख्यातः । इत्थं हि तत्र भाष्यम्—यं संसाराख्यमश्वत्थमूर्ध्वमूलमधः शाखमव्ययमश्वत्थं प्राहुः श्रुतयः । 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः। ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति इत्याद्याः । सप्तलोकोपरिनिविष्टचतुर्मुखस्याऽऽदित्वेन तस्योर्ध्वमूलत्वं पृथिवीनिवासिसकलनरपशुमृगक्रिमिकीटपतङ्गस्थावरान्ततयाऽधःशाखत्वमिति ।

तल्लक्षणमेव ब्रह्मेति दर्शयति ।

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वै तत्॥१॥

पूर्वमेव व्याकृतोऽयं मन्त्रः ॥ १ ॥

यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतम् ।

अयं मन्त्रः "कम्पनात्"[ ब्र० सू० १ । ३ । ३९ ] इतिसूत्रे भगवता भाष्यकृता व्याख्यातः । तत्रामुं मन्त्रं प्रस्तुत्य कृत्स्नस्य जगतोऽस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निःसृतानां तस्मात्संजातमहाभयनिमित्तमेजनं कम्पनं श्रूयते तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः । भयादस्याग्निस्तपतीत्यादिनैकार्थ्यान्महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमेति। विवृतं चैतच्छ्रुतप्रकाशिकायाम् । प्राण इति सप्तम्यन्तपदसामर्थ्यात् । स्थितानामित्यध्याहारः। कुतो निःसृतानामित्यपेक्षायां प्रकृतस्यैवोपादा-

१ मुद्रित पुस्तके अतोऽन्धकारे खद्योततु° इति पाठः ।

नत्वमाह—तत इति । एजनं कम्पनमिति । एजृ कम्पन इति हि धातुः । प्रत्यवायभयात्स्वस्वकार्यप्रवृत्तिः कम्पनम् । उद्यतवज्रादिव परमपुरुषात्संजातेन भयेन कृत्स्नं जगत्कम्पत इत्यर्थ इति । अत्र महद्भयं वज्रमुद्यतमिति चत्वारि पदानि पञ्चम्यर्थे प्रथमान्तानि । आद्यं पञ्चम्यर्थपदद्वयं भयवाचि । उत्तरं तु पदद्वयं तद्धेतुभूतप्राणशब्दितपरब्रह्मपरमिति द्रष्टव्यम् । केचित्तु बिभेत्यस्मादिति भयं भयानकमित्यर्थः । महाभयानकोद्यतवज्रवत्स्वस्मान्निःसृतं सकलं जगत्प्राणशब्दितः परमात्मा कम्पयति । एजतिर्ण्यर्थगर्भ इत्यमुमर्थं वर्णयन्ति ।

य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥

स्पष्टोऽर्थः । 'अत एव प्राणः' [ ब्र० सू० । १।१।२३ ] इत्यधिकरणन्यायात्प्राणशब्दस्य परमात्मपरत्वे न विवाद इति द्रष्टव्यम् ।

भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

धावतिशब्द इन्द्रादीनां स्वस्वव्यापारप्रवृत्तिपरः । शिष्टं स्पष्टम् ॥

इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ।

शरीरस्य विस्रसो विस्रंसनात्पतनात्प्रागिह लोके ब्रह्म बोद्धुमशकच्चेच्छक्नुवांश्चेत् । विकरणव्यत्ययश्छान्दसः ।

ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥

ततस्तस्माज्ज्ञानाभावाद्धेतोः सृज्यमानसर्वलोकेषु जन्मजरादिमस्वलक्षणशीर्यमाणत्वाय भवतीत्यर्थः । तस्माच्छरीरपातात्प्रागेवाऽऽत्मज्ञानाय यतेतेति भावः ॥ ४ ॥

आत्मनो दुर्बोधत्वमाह—

यथादर्शे तथाऽऽत्मनि ।

यथाऽऽदर्शे चन्द्रिकाया अभावान्न स्पष्टः प्रतिभासस्तथेह लोक आत्मनीत्यर्थः । यद्वा यथाऽऽदर्शे दर्पणे प्रतीयमानं वस्तु साक्षाद्दृष्टवस्तुगतप्रत्यङ्मुखत्वादिकल्पितार्थानवरुद्धतया नोपलभ्यते तथेहाऽऽत्मविषयिणी प्रतीतिरित्यर्थः ।

लोकान्तरेऽपि तथेत्याह—

यथा स्वप्ने तथा पितृलोके ।

यथा स्वप्नदर्शनस्य जाग्रद्दर्शनवत्सम्यक्तया संशयादिविरोधितया पुनरनुसंधानयोग्यत्वाभावस्तथा पितृलोक इत्यर्थः ।

यथाऽप्सुपरीव ददृशे तथा गन्धर्वलोके ।

यथाजलान्तरस्थवस्तुनो नेतरवत्स्पष्टप्रकाशस्तद्वत्परिददृश इव न वस्तुतः परितो दृश्यत इत्यर्थः । गन्धर्वलोकेऽप्यापाततः प्रतीतिमात्रमित्यर्थः ।

छायातपयोरिव ब्रह्मलोके ॥ ५ ॥

यथा छायातपयोर्मिश्रणे शुद्धातपवर्तिपदार्थवन्नोपलम्भ एवं ब्रह्मलोकेपि न सम्यगुपलम्भः । अतो दुरधिगममात्मतत्त्वमिति भावः । यद्वा ब्रह्मलोके यद्यपि छायातपयोर्विविच्योपलम्भवदात्मानात्मस्वरूपयोविविच्योपलम्भः संभवति तथाऽपि नात्रत्यानामात्मतत्त्वं सुलभमिति भावः ॥ ५ ॥

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ॥
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥

पृथग्भूतानामुत्पद्यमानानामिन्द्रियाणाम् । इन्द्रियाणामित्येतद्देहादीनामप्युपलक्षणम् । उदयास्तमयौ च यत् । यदिति त्वव्ययं यावित्यर्थः । यावुत्पादविनाशौ यश्च परस्परवैलक्षण्यलक्षणपृथग्भावश्च तान्सर्वानिन्द्रियादिगतान्मत्वा धीरो न शोचतीत्यर्थः । परस्परवैलक्षण्योत्पादविनाशौ ज्ञानैकाकारे नित्य आत्मनि न सन्तीति ज्ञात्वा न शोचतीत्यर्थः ॥ ६ ॥

देहाविविक्तप्रत्यगात्मज्ञानेऽपि भगवच्छरणागतिरेवोपाय इति पूर्वोक्तं णवरणमेव प्रतिपादयति—

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

इन्द्रियेभ्य इत्येतदर्थानामप्युपलक्षणं “ इन्द्रियेभ्यः परा ह्यर्था अर्थे-

भ्यश्च परं मनः'' [का० १।३।१०] इत्यनेनैकार्थ्यात् । सत्त्वशब्दो बुद्धिपरः 'मनसस्तु परा बुद्धिः'' [का० १।३।१०] इति पूर्वोक्तेः । अलिङ्गो लिङ्गागम्यः । परत्वं च वशीकार्यतायां विवक्षितम् । परस्य च वशीकरणं शरणागतिरेव । शिष्टं स्पष्टम् ॥ ७ ॥ ८ ॥

न संदृशे तिष्ठति रूपमस्य ।

अस्य रूपं स्वरूपं विग्रहो वा व्यापकत्वादेव संदर्शनविषयेऽभिमुखतया न तिष्ठतीत्यर्थः । अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः ।

अत एव—

न चक्षुषा पश्यति कश्चनैनम् ।

स्पष्टोऽर्थः ।

हृदा मनीषा मनसाऽभिक्लृप्तः ।

अयमंशः 'सर्वत्र प्रसिद्धोपदेशात् । [ब्र०सू०१।२।१] इत्यत्र व्यासार्यैः हृदेति भक्तिरुच्यते मनीषेति धृतिः ।

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।

इति पूर्वार्धमेकरूपं पठित्वा

भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह ।

इति महाभारत उक्तम् । अभिक्लृप्तो ग्राह्य इति विवृतः । धृत्या च समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति साक्षात्करोति प्राप्नोतीत्यर्थः । 'भक्त्या त्वनन्यया शक्यः [गी० ११।५४]इत्यनेनैकार्थ्यादिति वेदार्थसंग्रहे प्रतिपादितम् ।

य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।

ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानानीन्द्रियाणीत्यर्थः । 'सप्तगतेः' [ब्र० सू० २ । ४ । ५ ] इत्यधिकरणे व्यासार्यैस्तथा व्याख्यातत्वात् ।

बुद्धिश्च न विचेष्टते ।

अध्यवसायोपेतं मन एव बुद्धिशब्देनोच्यते । अत एव तत्र भाष्यम् ।

अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत इति ।

तामाहुः परमां गतिम् ।

शरीरान्तःसंचरणं विहाय मोक्षार्थगमनं परमागतिरिति तत्रैव स्पष्टम् ॥ १० ॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।

तां पूर्वमन्त्रनिर्दिष्टां बाह्याभ्यन्तरकरणधारणां परमां गतिं योगमिति मन्यन्ते । उक्तं च व्यासार्यैः परमा गतिर्योग इत्यर्थ इति ।

अप्रमत्तस्तदा भवति ।

इन्द्रियाणां निर्व्यापारत्व एवावहितचित्तता भवति ।

चित्तावधानं किमर्थमित्यत्राऽऽह—

योगो हि प्रभवाप्ययौ ॥ ११ ॥

योगस्य प्रतिक्षणापायशालितयाऽवधानमपेक्षितमिति भावः । यद्वा, इष्टप्रभवानिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वाद्योगस्य तत्राप्रमत्ततया भवितव्यमित्यर्थः ॥ ११ ॥

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।

स्पष्टोऽर्थः ।

प्राणवादे 'सप्तगतेर्विशेषितत्वाच्च [ब्र०सू०२।४।५] इन्द्रियाणि सप्तैव 'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त'[मु०२।१।८] इति सप्तानामेव परलोकगतिश्रवणात् । 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते' इति योगदशामिन्द्रियाणां परिगणितत्वाच्च सप्तैवेति प्राप्त उच्यते । 'हस्तादयस्तु स्थितेऽतो नैवं [ब्र०सू०२।४।६] शरीरे स्थित आदानादिलक्षणकार्योपयोगित्वाद्धस्तादयोऽपीन्द्रियाण्येव । अतो नैवम् । 'दशेमे पुरुषे प्राणा आत्मैकादशः' [बृ०३।९।४] । आत्मशब्देन मनोऽभिधीयते । 'इन्द्रियाणि दशैकं च । एकादशं मनश्चात्रेति श्रुतिस्मृतिभ्यां न्यूनसंख्यावादा उपकारविशेषाभिप्रायाः । अधिकसंख्यावादाश्च मनोवृत्तिभेदादिति स्थितम् । अमुमेवार्थमुपपादयति—

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थः । तस्योपनिषदेकगम्यत्वादित्यर्थः ॥ १२ ॥

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ॥
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

तत्त्वं भावयतीति तत्त्वभावोऽन्तःकरणं तेन च परमात्माऽस्तीत्येवोपलब्धव्यः । वेदान्तवाक्यैरस्तीत्युपलब्धस्य मनसाऽप्यस्तीत्येवं मनननिदिध्यासने कर्तव्ये इत्यर्थः । उभयोर्हेत्वोरुभाभ्यां शब्दमनोरूपाभ्यामस्तीत्येवोपलब्धस्य ज्ञातवता भुक्ता ब्राह्मणा इतिवदयं निर्देशः । तत्त्वभावः प्रसीदति मनः प्रसन्नं भवति शान्तरागादिदोषं भवतीत्यर्थः ॥ १३ ॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥
अथ मर्त्योऽमृतो भवति ॥

कामादेर्विषयिविषयकमनोरथा हृद्गता यदा शान्ता भवन्ति तदाऽनन्तरमेवायमुपासकोऽमृतो भवति । विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरो भवतीत्यर्थः ।

अत्र ब्रह्म समश्नुते ॥ १४ ॥

अत्रैव ब्रह्मोपासनवेलायां ब्रह्मानुभवतीत्यर्थः । ' समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ' [ ब्र० सू० ४।२।७ ] इत्यत्र भाष्यम्— अनुपोष्य शरीरेन्द्रियादिसंबन्धमदग्ध्वैव, यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते तदुच्यते यदा सर्वे प्रमुच्यन्त इत्यादिकया श्रुत्येत्यर्थः । अत्र ब्रह्म समश्नुत इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्राय इति ॥ १४ ॥

उक्तमेवार्थं सादरेणाभ्यसन्नुपदेष्टव्यांश एतावानेवेत्युपसंहरति—

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥

ग्रन्थयो ग्रन्थिवद्दुर्मोचा रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः । एतावदनुशासनमनुशासनीयमुपासकस्य कर्तव्यत्वेनोपदेष्टव्यमेतावदेव ।

अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत इति ।

तामाहुः परमां गतिम् ।

शरीरान्तःसंचरणं विहाय मोक्षार्थगमनं परमागतिरिति तत्रैव स्पष्टम् ॥ १० ॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।

तां पूर्वमन्त्रनिर्दिष्टां बाह्याभ्यन्तरकरणधारणां परमां गतिं योगमिति मन्यन्ते । उक्तं च व्यासार्यैः परमा गतिर्योग इत्यर्थ इति ।

अप्रमत्तस्तदा भवति ।

इन्द्रियाणां निर्व्यापारत्व एवावहितचित्तता भवति ।

चित्तावधानं किमर्थमित्यत्राऽऽह—

योगो हि प्रभवाप्ययौ ॥ ११ ॥

योगस्य प्रतिक्षणापायशालितयाऽवधानमपेक्षितमिति भावः । यद्वा, इष्टप्रभवानिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वाद्योगस्य तत्राप्रमत्ततया भवितव्यमित्यर्थः ॥ ११ ॥

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।

स्पष्टोऽर्थः ।

प्राणवादे 'सप्तगतेर्विशेषितत्वाच्च [ब्र०सू०२।४।५] इन्द्रियाणि सप्तैव 'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त'[मु०२।१।८] इति सप्तानामेव परलोकगतिश्रवणात् । 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते' इति योगदशामिन्द्रियाणां परिगणितत्वाच्च सप्तैवेति प्राप्त उच्यते । 'हस्तादयस्तु स्थितेऽतो नैवं [ब्र०सू०२।४।६] शरीरे स्थित आदानादिलक्षणकार्योपयोगित्वाद्धस्तादयोऽपीन्द्रियाण्येव । अतो नैवम् । 'दशेमे पुरुषे प्राणा आत्मैकादशः' [बृ०३।९।४] । आत्मशब्देन मनोऽभिधीयते । 'इन्द्रियाणि दशैकं च । एकादशं मनश्चात्रेति श्रुतिस्मृतिभ्यां न्यूनसंख्यावादा उपकारविशेषाभिप्रायाः । अधिकसंख्यावादाश्च मनोवृत्तिभेदादिति स्थितम् । अमुमेवार्थमुपपादयति—

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थः । तस्योपनिषदेकगम्यत्वादित्यर्थः ॥ १२ ॥

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ॥
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

तत्त्वं भावयतीति तत्त्वभावोऽन्तःकरणं तेन च परमात्माऽस्तीत्येवोपलब्धव्यः । वेदान्तवाक्यैरस्तीत्युपलब्धस्य मनसाऽप्यस्तीत्येवं मननिदिध्यासने कर्तव्ये इत्यर्थः । उभयोर्हेत्वोरुभाभ्यां शब्दमनोरूपाभ्यामस्तीत्येवोपलब्धस्य ज्ञातवता भुक्ता ब्राह्मणा इतिवदयं निर्देशः । तत्त्वभावः प्रसीदति मनः प्रसन्नं भवति शान्तरागादिदोषं भवतीत्यर्थः ॥ १३ ॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥
अथ मर्त्योऽमृतो भवति ॥

कामादेर्विषयविषयकमनोरथा हृद्गता यदा शान्ता भवन्ति तदाऽनन्तरमेवायमुपासकोऽमृतो भवति । विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरो भवतीत्यर्थः ।

अत्र ब्रह्म समश्नुते ॥ १४ ॥

अत्रैव ब्रह्मोपासनवेलायां ब्रह्मानुभवतीत्यर्थः । ‘समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य’ [ ब्र० सू० ४।२।७ ] इत्यत्र भाष्यम्—अनुपोष्य शरीरेन्द्रियादिसंबन्धमदग्ध्वैव, यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते तदुच्यते यदा सर्वे प्रमुच्यन्त इत्यादिकया श्रुत्येत्यर्थः । अत्र ब्रह्म समश्नुत इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्यभिप्राय इति ॥ १४ ॥

उक्तमेवार्थं सादरेणाभ्यसन्नुपदेष्टव्यांश एतावानेवेत्युपसंहरति—

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥

ग्रन्थयो ग्रन्थिवद्दुर्मोचा रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः । एतावदनुशासनमनुशासनीयमुपासकस्य कर्तव्यत्वेनोपदेष्टव्यमेतावदेव ।

वक्ष्यमाणमूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनादिकं न साधककृत्यं किंतूपासनप्रीतभगवत्कृत्यमिति भावः ॥ १५ ॥

विमुक्तश्च विमुच्यत इति पूर्वमुक्तम् । द्वितीयां परममुक्तिमाह—

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।

हृदयस्य प्रधाननाड्यः शतं चैका च सन्ति । तासां मध्य एका सुषुम्णाख्या ब्रह्मनाडी मूर्धानमभिनिःसृता ।

तयोर्ध्वमायन्नमृतत्वमेति ॥

तया नाड्योर्ध्वं ब्रह्मलोकं गच्छन्देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकस्वस्वरूपाविर्भावलक्षणां मुक्तिं प्राप्नोति ।

विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

अन्यास्तु नाड्यो विष्वगुत्क्रमणे नानाविधसंसारमार्गोत्क्रमणायोपयुज्यन्ते । विष्वग्वितता नाड्योऽन्योत्क्रमण उपयुज्यन्त इति व्यासार्यैर्व्याख्यातम् । इदं च वाक्यं भगवता बादरायणेनोत्क्रान्तिपादे चिन्तितं तथा हि—मूर्धन्यया शताधिकया नाड्या विदुषो गमनमन्याभिरविदुष इति नियमो नोपपद्यते । नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति याहच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमित्येवं पूर्वपक्षे प्राप्ते । 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकतया' [ ब्र० सू० ४।२।१७ ] इति सूत्रेण सिद्धान्तितं तस्य चायमर्थः । तदोको जीवस्य स्थानं हृदयमग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनं तेनाग्रज्वलनेन प्रकाशितद्वारो भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' [ बृ० ४।४।२ ] इति श्रुतेः । एतावद्विद्वदविद्वत्वसाधारणम् । विद्वांस्तु शताधिकया मूर्धन्ययैव नाड्योत्क्रामति । न चास्या नाड्या विदुषो दुर्विवेचत्वम् । विद्वान्हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद्विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति । ततस्तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते । प्रकृतमनुसरामः ॥ १६ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये संनिविष्टः ॥

स्पष्टोऽर्थः ।

तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥

यथा देवदत्तः स्वाच्छरीराद्विलक्षण इत्युक्ते यथा स्वशब्दः समभिव्याहृतदेवदत्तसंबन्धिपरामर्शी, एवं पूर्वनिर्दिष्टान्तरात्मसंबन्धिपरामर्शी स्वशब्दः । ततश्चायमर्थः । तं जनानामन्तरात्मानं तच्छरीरभूताज्जनशब्दिताच्चेतनात्प्रवृहेद्विविच्य जानीयात् । 'जुष्टं यदा पश्यत्यन्यमीशम् [ श्वे० ४ । ७ ] इति श्रुत्युक्तरीत्या धारकत्वनियन्तृत्वशेषत्वादिना विलक्षणं जानीयादित्यर्थः। मुञ्जात्तृणविशेषादिषीकां तन्मध्यवर्तिस्थूलतृणविशेषमिव धैर्येण ज्ञानकौशलेनेति पूर्वेणान्वयः ।

तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥

उक्तोऽर्थः । द्विर्वचनमुपदेशसमाप्त्यर्थम् ॥ १७ ॥

उपसंहरति—

मृत्युप्रोक्तां नचिकेतोऽथलब्ध्वा विद्यामेतां योग-
विधिं च कृत्स्नम् ॥ ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युः

नचिकेतो मृत्युप्रोक्तामात्मविद्यां यदा पञ्चत्याद्युक्तं योगविधिं च लब्ध्वा प्राप्य 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते [ छा० ८ । ३ । ४ ] इति श्रुत्युक्तरीत्या ब्रह्म प्राप्याऽऽविर्भूतगुणाष्टकोऽभूदित्यर्थः ।

अन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

अध्यात्मविद्यां योऽन्योऽपि वेत्ति सोऽप्येवमेव नाचिकेता इव भवतीर्थः ॥ १८ ॥

शिष्याचार्ययोः शास्त्रीयनियमातिलङ्घनकृतदोषप्रशमनार्थं शान्तिरुच्यते—

स ह नाववतु ।

स विद्याप्रकाशितः परमात्मा हशब्दः प्रसिद्धौ नौ शिष्याचार्याववतु स्वस्वरूपप्रकाशेन रक्षतु ।

सह नौ भुनक्तु ।

विद्याप्रचयद्वाराऽऽवां सहैव परिपालयतु । यद्वा विश्लेषमन्तरेणाऽऽवां सहिताविव यथा स्याव तथा पालयत्वित्यर्थः ॥

सह वीर्यं करवावहै ।

सनियमविद्याप्रदानेन विद्यायाः सामर्थ्यं निष्पादयावहै नियमाभावे विद्या निर्वीर्या भवतीति भावः ॥

तेजस्विनावधीतमस्तु ।

नावावयोर्यदधीतं तत्तेजस्व्यस्तु । वीर्यवत्तरं भवत्वित्यर्थः ।

मा विद्विषावहै ॥ १९ ॥

यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति ।
तयोरेकतरः प्रैति विद्वेषं चाधिगच्छति ॥

इतिस्मृत्युक्तरीत्याऽधर्माध्ययनाध्यापननिमित्तो द्वेष आवयोर्मा भूदित्यर्थः ॥ १९ ॥

ॐ शान्तिः शान्तिः शान्तिः ।

इति काठकोपनिषदि द्वितीयोऽध्यायः ॥ २ ॥

त्रिर्वचनं दोषशान्त्यर्थम् । इयं चोपनिषद्भगवत्परैवेति भगवता बादरायणेन समन्वयाध्याये त्रिभिरधिकरणैर्निर्णीतम् । तत्र 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः [ क० १ । २ । २५ ] इतिवाक्ये ब्रह्मक्षत्रिययोरोदनत्वनिरूपणेन भोज्यत्वस्य वा भोग्यत्वस्य वा प्रतीतेस्तत्प्रतिसंबन्धी यस्येति षष्ठ्यन्तयच्छब्दनिर्दिष्टो भोक्ता जीव एव स्यात्परमात्मनो भोक्तृत्वासंभवादिति पूर्वपक्षं कृत्वा 'अत्ता चराचरग्रहणात्' 'प्रकरणाच्च' 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' 'विशेषणाच्च' [ ब्र० सू० १ । २ । ९ । १० । ११ । १२ ] इति चतुर्भिः सूत्रैः सिद्धान्तः कृतस्तेषां चायमर्थः । उभे भवत ओदन इत्योदनप्रतिसंबन्धितया प्रतीयमानोऽत्ता परमात्मैव, ब्रह्मक्षत्रशब्दगृहीतनिखिलचराचरसंहर्तृत्वस्यात्र मन्त्रे प्रतिपादनात् । अत्र ब्रह्मक्षत्रशब्दयोर्निखिलचराचरलक्षकत्वप्रकार ओदनशब्दस्य विनाश्यत्वलक्षकत्वप्रकारश्चैतन्मन्त्रव्याख्यानावसरे दर्शितस्तत्रैवानुसंधेयः। 'महान्तं विभुमात्मानम्' [क० १ । २ । २२ ] इति प्रस्तुतत्वेन तस्य ब्रह्मप्रकरणमध्यगतत्वाच्च। ननु ऋतं पिबन्तावित्युत्तरमन्त्रे कर्म-

फलभोगान्वयिनोरेव प्रतिपादनात्परमात्मनश्च जीववत्कर्तृत्वेन वाऽन्तःकरणवत्करणत्वेन वाऽन्वयासंभवात्परमात्मप्रकरणमध्यगतत्वं नास्तीत्याशङ्क्योक्तं गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति । गुहां प्रविष्टौ जीवपरमात्मानावेव । तयोरेवास्मिन्प्रकरणे गुहाप्रवेशदर्शनात् । 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्' [क० १।२। १२ ] इति परमात्मनो गुहाप्रवेशः श्रूयते 'या प्राणेन संभवत्यदितिर्देवतामयी गुहां प्रविश्य' [क० २। १ । ७ ] इति जीवस्यापि गुहाप्रवेशो दृश्यते । अतो द्वयोरपि गुहाप्रवेशदर्शनात्तयोरेव पिबदपिबतोश्छत्रिन्यायेन ऋतं पिबन्ताविति निर्देशस्य संभवात् । ऋतं पिबन्ताविति मन्त्रेण न परमात्मप्रकरणविच्छेदः शक्यशङ्कः । 'विशेषणाच्च' अस्मिन्प्रकरणे 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' [क० १।१।१७] इति जीवपरयोरुपास्यत्वोपासकत्वादिना विशेषितत्वात्तयोरेवोपासनसौकर्यायैकाधिकरणस्थत्वप्रतिपादनार्थत्वादृतं पिबन्ताविति मन्त्रस्य जीवपरप्रतिपादकत्वमेव । अतो यस्य ब्रह्म च क्षत्रं चेति मन्त्रः परमात्मपर एवेति निर्णीतम् । तथाऽङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । 'ईशानो भूतभव्यस्य न ततो विजुगुप्सते' [क० २।१। १२] इति मन्त्रेऽङ्गुष्ठमात्रतया निर्दिश्यमानो जीव एव । अङ्गुष्ठमात्रत्वस्य जीवधर्मतया 'प्राणाधिपः संचरति स्वकर्मभिः' [ श्वे० ५ । ७ ] 'अङ्गुष्ठमात्रो रवितुल्यरूपः' [ श्वे० ५ । ८ ]

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ।

इति श्रुतिस्मृतिप्रसिद्धत्वादिति पूर्वपक्षं कृत्वा 'शब्दादेव प्रमितः' 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' [ब्र० सू० १।३।२४।२५] 'कम्पनात्' 'ज्योतिर्दर्शनात्' [ब्र० सू० १।३ ३९।४०] इति चतुर्भिः सूत्रैः सिद्धान्तः कृतस्तेषां चायमर्थः । अङ्गुष्ठप्रमितः परमात्मा शब्दादेव, ईशानो भूतभव्यस्येतीश्वरत्ववाचकेशानशब्दादेव । ननु कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राऽऽह—हृद्यपेक्षया तु मनुष्याधिकारत्वात् । हृदि हृदये परमात्मनो वर्तमानत्वात्तदपेक्षयाऽङ्गुष्ठमात्रत्वमुपपद्यते । न च खरतुरगादीनामङ्गुष्ठशून्यानां हृदयस्याङ्गुष्ठप्रमितत्वाभावात्तदन्तर्वर्तिनः परमात्मनः कथमङ्गुष्ठमात्रत्वमिति वाच्यम् । उपासनातिशायिशास्त्रस्य मनुष्याधिकारिकत्वात्तेषां चाङ्गुष्ठसंभवात्तद्धृदयवर्तिनः परमात्मनोऽङ्गुष्ठसमपरिमाणस्य हृदयावच्छेदनिबन्धनाङ्गुष्ठप्रमितत्वे नानुपपत्तिः । 'कम्पनात्' 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतम्' [क० २।३।२]

इति समस्तप्राणिकम्पनहेतुभयहेतुत्वस्यास्मिन्नङ्गुष्ठप्रमित आम्नानात् । तस्य च परमात्मधर्मत्वस्य 'भीषाऽस्माद्वातः पवते' इत्यादिश्रुतिप्रतिपन्नत्वादङ्गुष्ठप्रमितः परमात्मा । ज्योतिर्दर्शनात् । 'न तत्र सूर्यो भाति न चन्द्रतारकम्' [क०२।२।१५] इत्यङ्गुष्ठप्रमिते सकलतेजश्छादकज्योतिःसंबन्धप्रतिपादनात्, तादृशज्योतिःसंबन्धस्याथर्वणे ब्रह्मसंबन्धितया प्रतिपादितत्वाच्चाङ्गुष्ठप्रमितः परमात्मेत्यर्थः । तथा 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः' [क० १ । ३ । १० ] 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' [क० १ । ३ । ११ ] इति वाक्ये सांख्यप्रक्रियाप्रत्यभिज्ञानात्पञ्चविंशातिरिक्तपुरुषनिषेधाच्च सांख्याभिमतब्रह्मात्मकं प्रधानमेवाव्यक्तशब्देनाभिधीयत इति 'आनुमानिकमप्येकेषामिति चेदिति सूत्रखण्डेन पूर्वपक्षं कृत्वा शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' [ब्र० सू० १ । ४ । १ ] 'सूक्ष्मं तु तदर्हत्वात' [ ब्र० सू० १ । ४ । २] 'तदधीनत्वादर्थवत्' [ब्र०सू०१।४।३] 'ज्ञेयत्वावचनाच्च' [ब्र०सू०१।४।४] 'वदतीति चेन्न प्राज्ञो हि प्रकरणात' [ब्र० सू० १।४।५] 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' [ब्र० सू० १।४।६] 'महद्वच्च' [ ब्र० सू० १।४।७ ] इति सप्तभिः सूत्रैः सिद्धान्तः कृतस्तेषां चायमर्थः । आनुमानिकं नाव्यक्तशब्दाभिलप्यम् । उपासनोपयोगिवशीकरणाय 'आत्मानꣳ रथिनं विद्धि शरीरं रथमेव च' [क०१।३।३।] इतिवाक्ये रथरथ्यादिभावेन रूपितेष्वात्मशरीरबुद्धिमनइन्द्रियविषयेषु रथरूपकात्मना शरीरं रथमेव चेति विन्यस्तस्य शरीरस्यैवाव्यक्तशब्देन ग्रहणसंभवात् । अस्मिंश्च प्रकरण इन्द्रियादिवशीकरणप्रकारस्यैव 'यच्छेद्वाङ्मनसी प्राज्ञः' [ क० १।३।१३ ] इत्यादौ दर्शनात्तदनुसारेणाव्यक्तशब्देन शरीरमेव गृह्यते । ननु कथमव्यक्तशब्देन व्यक्तस्य शरीरस्याभिधानं तत्राऽऽह— सूक्ष्मं तु तदर्हत्वात् । भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति । ततश्च कारणवाचिनाऽव्यक्तशब्देन स्थूलं शरीरमेवोपचारादुच्यत इत्यर्थः । ननूक्तशब्दस्य मुख्य एवार्थोऽस्तु । कुतः स्थूलशरीरे लक्षणाऽभ्युपगन्तव्येत्यत्राऽऽह—तदर्हत्वादिति । स्थूलशरीरस्यैव कार्यार्हत्वात्तस्यैव वशीकार्यत्वाय प्रतिपादनस्यापेक्षितत्वादव्यक्तशब्देन कारणवाचिना स्थूलशरीरलक्षणोचितेति भावः । ननु यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषस्तत्राऽऽह—तदधीनत्वादर्थवत् ।

अस्मन्मतेऽव्यक्तस्य परमात्माधीनतया तदधिष्ठितत्वेन प्रयोजनवत्त्वमस्ति सांख्यमते तदनभ्युपगमात्तस्य निष्प्रयोजनत्वमिति भावः। ज्ञेयत्वावचनाच्च। यदि तन्त्रसिद्धमेवाविवक्षिष्यत्तदाऽस्य ज्ञेयत्वमविवक्षिष्यत्। व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्। न चास्य ज्ञेयत्वमुच्यते। अतो न तन्त्रसिद्धस्येह ग्रहणम्। वदतीति चेन्न प्राज्ञो हि प्रकरणात्। 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' [क० २।३।१५]। इत्युक्तस्य ज्ञेयत्वमनन्तरमेव श्रुतिर्वदतीति चेन्न। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्। [क० १।३।९] इति प्राज्ञस्य परमात्मनः प्रकरणात्स एवाशब्दमस्पर्शमिति मन्त्रे ज्ञेयत्वेन निर्दिश्यते न तन्त्रसिद्धमव्यक्तम्। त्रयाणामेव चैवमुपन्यासः प्रश्नश्च। अस्मिन्प्रकरण उपायोपेयोपेतॄणां त्रयाणामेव ज्ञेयत्वोपन्यासः। अन्यत्र धर्मादन्यत्राधर्मादिति प्रश्नश्च दृश्यते नाव्यक्तादेः। महद्वच्च। यथा 'बुद्धेरात्मा महान्परः' [क० १।३।१०] इत्यत्राऽऽत्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्वं गृह्यते। एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम्। अत इयमुपनिषत्सर्वाऽपि परमात्मपरेति त्रिभिरधिकरणैर्निर्णीतम् ॥ १९ ॥

इतिश्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौमश्रीमद्रङ्गरामानुजमुनिवरविरचितकाठकोपनिषत्प्रकाशिकायां द्वितीयाध्याये तृतीया वल्ली समाप्ता ॥

---

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति कठवल्लीप्रकाशिका समाप्ता।

ॐ तत्सद्ब्रह्मणे नमः ।

# प्रश्नोपनिषत् ।

---

रङ्गरामानुजविरचितप्रकाशिकासमेता ।

---

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गाभमञ्जलिर्मम गाहताम् ॥ १ ॥

सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः ।
कौशल्यश्चाऽऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ॥

भरद्वाजस्यापत्यं पुमान्भारद्वाजः । नामतः सुकेशा । शिबेरपत्यं शैब्यः । नामतः सत्यकामः । सूर्यायणस्यापत्यं सौर्यायणिः । ईकारश्छान्दसः । गोत्रतो गार्ग्यः । कौशल्यो नामतः । अश्वलायनस्यापत्यमाश्वलायनः । भार्गवो गोत्रतः । विदर्भस्यापत्यं वैदर्भिः । कबन्धी नामतः । कात्यायनो गोत्रतः ।

ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः ।

ते ह प्रसिद्धाः । एत उक्ताः सुकेशसत्यकामसौर्यायणीकौशल्यभार्गवकबन्धिनः षडृषयो ब्रह्मपरा वेदैकशरणाः । ब्रह्मनिष्ठा वेदार्थतात्पर्यवन्तः । यद्वा ब्रह्मपरा ब्रह्मज्ञानतत्पराः । ब्रह्मनिष्ठास्तपोनिष्ठाः । वेदस्तत्त्वं तपो ब्रह्मेत्युक्तेः । परं ब्रह्म परमुत्कृष्टं निरुपचितं ब्रह्म स्वरूपतो गुणतश्च बृहद्भूतं वस्त्वन्वेषमाणा विजिज्ञासमाना इत्यर्थः ।

एष ह वै तत्सर्वं वक्ष्यतीति ते समित्पाणयो
भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

हशब्दः प्रसिद्धौ । वैशब्दोऽवधारणे । एषोऽस्मद्बुद्धौ वर्तमानः परब्रह्मवित्त्वेन प्रसिद्धः पिप्पलाद एव । षण्णामस्माकं जिज्ञासितानर्थान्वक्तुं प्रभवतीति पर्यालोच्य समिद्धाराद्युपायनपाणयः शास्त्रदृष्टेन विधिना पूज्यं पिप्पलादमुपगता इत्यर्थः ॥ १ ॥

तान्ह स ऋषिरुवाच ।

स्पष्टोऽर्थः ।

भूय एव तपसा ब्रह्मचर्येण श्रद्धया
संवत्सरं संवत्स्यथ यथाकामं

प्रश्नान्पृच्छत यदि विज्ञास्यामः
सर्वं ह वो वक्ष्याम इति ॥ २ ॥

यद्यपि पूर्वमेव भवन्तस्तपोब्रह्मचर्यादिसंपन्नास्तथाऽपि ब्रह्मविद्याग्रहणार्थं पुनरपि शरीरशोषणादिलक्षणतपसा योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृत्तिलक्षणाष्टविधमैथुनवर्जनरूपब्रह्मचर्येणाऽऽस्तिक्यबुद्धिलक्षणया श्रद्धया युक्ताः सन्तः संवत्सरमात्रं वासं कुर्वन्त्विति यावत्। ततः स्वेच्छानुरोधेन प्रष्टव्यानर्थान्पृच्छत। यदि तानर्थान्वयं विज्ञास्यामस्तदा वञ्चनमन्तरेण सर्वं वक्ष्यामः। यद्यस्मासु ज्ञातृत्वनिश्चयाभावेन संवत्सरब्रह्मचर्यतपआदौ बहुक्लेशसाध्ये प्रवृत्तिर्न युष्मभ्यं रोचते तदा सुखेन गन्तव्यमिति भावः। ततश्च गुरोर्ज्ञातृत्वपरीक्षामन्तरेणैव शुश्रूषा कार्येत्ययमर्थः शिक्षितो भवति। तथा गुरोरपि शिष्यसंग्रहे नातीवाऽऽदरः कर्तव्य इत्यर्थः सूचितः ॥ २ ॥

अथ कबन्धी कात्यायन उपेत्य पप्रच्छ।

संवत्सरवासानन्तरमन्यैरनुज्ञातः कबन्धी पिप्पलादस्य समीपं यथाविध्युपगम्य पप्रच्छ।

किमिति—

भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

स्पष्टोऽर्थः।

तस्मै स होवाच।

एवं पृष्टवते कबन्धिने पिप्पलाद उवाच

प्रजाकामो ह वै प्रजापतिः स तपोऽतप्यत।

अत्र प्रजापतिशब्दो ब्रह्मपरः। अस्य कारणवाक्याद्यासार्यैः सर्वव्याख्यानाधिकरणेऽत्रत्यप्रजापतिशब्दस्य ब्रह्मपरत्वस्य समर्थितत्वात्। स प्रसिद्धः प्रजापतिः परमात्मा प्रजासृष्टिकामनया स्रष्टव्यालोचनरूपं तपोऽतप्यत कृतवान्।

स तपस्तप्त्वा मिथुनमुत्पादयते रयिं च प्राणं चेति।

एवं स्रष्टव्यं पर्यालोच्य रयिप्राणशब्दितप्रकृतिपुरुषाख्यं मिथुनमुत्पादितवानित्यर्थः।

केनाभिप्रायेणेत्यत आह—

एतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

प्रजाकामस्य ममैतौ रयिप्राणावनेकप्रकारान्प्राणिन उत्पादयिष्यत इत्यभिप्रायेणेत्यर्थः ॥ ४ ॥

रयिप्राणशब्दार्थमाह—

आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ।

आदत्त इत्यादित्यो भोक्ता स एव प्राण इत्यर्थः । आदित्यशब्दितभोक्तृप्रतिद्वन्द्वतया भोग्यवर्गस्य चन्द्रत्वेन निर्देशः । तस्य प्राणशब्दितत्वे हेतुः समनन्तरमेव वक्ष्यति । रयिरेव चन्द्रमा इत्यस्याभिप्रेतमर्थमाह—

रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥ ५ ॥

मूर्तिशब्देन पृथिव्यप्तेजांसि उच्यन्ते । अमूर्तशब्देन वाय्वन्तरिक्षे उच्येते । सर्वमपि भूतजातं रयिरन्नं भोग्यमित्यर्थः । तस्मान्मूर्तशब्दितं पाञ्चभौतिकं शरीरं सर्वं भोग्यमेवेत्यर्थः ॥ ५ ॥

अथाऽऽदित्यः ।

रयिनिरूपणानन्तरमादित्यो वर्ण्यत इति शेषः । आदित्यशब्दितस्य भोक्तुः प्राणशब्दितत्वे हेतुरुच्यत इति यावत् ।

उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणा-
न्रश्मिषु संनिधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं
यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति
तेन सर्वान्प्राणान्रश्मिषु संनिधत्ते ॥ ६ ॥

अयं जीवः सुषुप्तिस्थानात्प्रबुध्यमान एव सन्प्राचीं दक्षिणां प्रतीचीमुदीचीमधश्चोर्ध्वमन्तरा दिशश्च सर्वं प्रकाशयंस्तत्तद्दिग्वर्तीन्द्रियाणि धर्मभूतज्ञानाख्यरश्मिद्वारा बिभर्ति तस्मात्स एव सर्वप्राणशब्दितेन्द्रियनिर्वोढृत्वात्प्राण इत्यर्थः । प्राचीं दिशं प्रविशति प्रकाशयति प्राच्यान्पदार्थानुपलभत इति यावत् । तेन तस्माद्धेतोः प्राच्यान्प्राणान्रश्मिषु संनिधत्ते पूर्वदिग्वर्तिपदार्थप्रकाशकचक्षुरादीन्प्राणान्धर्मभूतज्ञानाख्यरश्मिमुखेनाधितिष्ठति प्रेरयति । धर्मभूतज्ञानेन तदधिष्ठातृत्वलक्षणसंनिधानाभावे चक्षुरादिना करणेन रूपाद्युपलम्भो न स्यात् । चेतनानधिष्ठि-

तस्य करणस्य कार्यासमर्थत्वादिति भावः । यद्दक्षिणां यत्प्रतीचीं यदुदीचीमित्यादौ यद्दक्षिणां प्रविशति तेन दाक्षिणात्यान्प्राणान्रश्मिषु संनिधत्ते यत्प्रतीचीं प्रविशति तेन प्रतीच्यान्प्राणान्रश्मिषु संनिधत्त इत्यादिशेषः पूरणीयः । लाघवार्थं प्रतिपर्यायं तदनुक्तिः । अत्र प्रजाः सिसृक्षुः परमात्मा प्रकृतिं पुरुषं च ससर्जेति वक्तव्ये परोक्षरूपेण रयिप्राणशब्दाभ्यां तदभिलापो रयिप्राणयोश्चन्द्रादित्यशब्दाभ्यामाभिलापश्च परोक्षप्रिया इव हि देवाः [ऐत० १।३] इति रीत्या रहस्यार्थस्य स्फुटतरोपदेशानर्हत्वसूचनार्थः ॥ ६ ॥

आदित्यो ह वै प्राण इति प्राणादित्यशब्दनिर्दिष्टस्य भोक्तृवर्गस्योच्यमानस्य परमात्मात्मकतामाह—

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते ।

यः प्राक्प्रस्तुतः प्रजापतिशब्दितो विश्वेषां नराणां नेतृत्वेन वैश्वानरशब्दवाच्यः सर्वशरीरतया विश्वरूपशब्दितः । अग्रनेतृत्वादिगुणयोगेनाग्निशब्दितः स एष प्राक्प्रजापतिशब्दनिर्दिष्टः परमात्माऽऽदित्यो ह वै प्राण इति प्राणशब्दितभोक्तृरूपः सन्नुदयत इत्यर्थः । अयं च मन्त्रो वैश्वानराधिकरणे परमात्मपरतया सिद्धवत्कृत्य भगवता भाष्यकृता व्यवहृतः ।

अत एवंव्याख्यातमिति द्रष्टव्यम् ।

तदेतदृचाऽभ्युक्तम् ॥ ७ ॥

तदेतद्ब्रह्माभिमुखीकृत्य ऋचा मन्त्रेणाप्युक्तम् ॥ ७ ॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योति-
रेकं तपन्तम् । सहस्ररश्मिः शतधा वर्त-
मानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

विश्वरूपं सर्वशरीरम् । जातानि वेदांसि यस्मात्स जातवेदाः । प्रज्ञा च तस्मात्प्रसृता पुराणी [श्वे० ३ । १८] इति सर्वज्ञानोत्पादकं परायणं परमप्राप्यं ज्योतिः सर्वप्रकाशकं दीप्तिमन्तमेकमद्वितीयं तपन्तं जठराग्न्यादिरूपेण तपन्तम् ।

संतापयति स्वं देहमापादतलमस्तकम् ।
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् [ गी० १५ । १४ ] इति श्रुतिस्मृतिभ्याम् । हरिणं हारिमित्यर्थः । हरिशब्दस्य नान्तत्वं छान्दसम् । वर्तमानोऽनुवर्तमानस्तद्विधेयतया तच्छरीरभूत इति । सहस्ररश्मिर्नानाविधविषयकज्ञानवान् । प्रजानां स्थावरजङ्गमात्मकानां प्राणो धारकः सूर्यवत्प्रकाशकः । एष जीवः शतधा देवमनुष्यादिनानाविधदेहात्माभिमानशालितया सुषुप्तिस्थानादुदयते सर्गकाल उदयत इति वाऽर्थः ॥८॥

एवं सूक्ष्मप्रकृतिजीवशरीरकस्य प्रजापतेरयिप्राणशब्दितप्रकृतिपुरुषरूपभोग्यभोक्त्रात्मना विभागमुपवर्ण्य तस्यैव परमात्मनोऽखण्डकालरूपेण स्थितस्य खण्डकालरूपेण विभागं दर्शयिष्यंश्चित्तावतरणाय वोपासनार्थं वा संवत्सराख्यप्रजापतेर्दक्षिणोत्तरायणात्मकं रयिप्राणरूपं विभागं तथा मासाख्यप्रजापते रयिप्राणशब्दितं कृष्णशुक्लपक्षात्मकं विभागमहोरात्रात्मककालरूपप्रजापते रयिप्राणात्मकं रात्र्यहरात्मकं विभागं तत्प्रसङ्गेन रयिशब्दार्थदक्षिणायनकृष्णपक्षरात्र्यपेक्षया प्राणशब्दार्थभूतोत्तरायणशुक्लपक्षे दिवसानामुत्कर्षं च वक्तुमारभते —

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च ।

वत्सराख्यकालरूपस्य प्रजापतेर्दक्षिणोत्तरशब्दिते द्वे अयने सूर्यगत्याधारभूते द्वे रूपे स्तः ।

तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते । ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते ॥

ह वा इति प्रसिद्धौ स्मरणे वा । अयमर्थः । ये पुरुषा इष्टापूर्ते दत्तमिति तत्कर्मोपासत इत्यर्थः । 'य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' [छा०५।१०।३]इतिश्रुत्यन्तरैकार्थ्यात्कृतशब्दो दत्तपरः । इष्टं यागादि । पूर्तं खातादि । इति शब्दः प्रकारवचनः । यागदानवापीकूपादिकं कर्म येऽनुतिष्ठन्ति ते चन्द्रमसः संबन्धिनं लोकमभिजयन्ते प्राप्नुवन्ति त एव पुनरावर्तन्ते । न त्वात्मोपासका उत्तरमार्गेण गता इत्यर्थः ॥

तस्मादेके[1] ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते एष वै रयिर्यः पितृयाणः ॥ ९ ॥

तस्माद्वेतोरेके कर्मठाः प्रजास्वर्गादिलक्षणक्षुद्रफलकामा ऋषयः

---

१ आनन्दाश्रमस्थपुस्तके—°देत ऋ° ।

क्षुद्रफलद्रष्टारो दक्षिणपन्थानं पितृयाणशब्दितं प्रतिपद्यन्ते । एष एव पितृयाणो रयिरन्नप्रधानो वैषयिकभोगात्मक इति यावत् । यद्यपि धूमो रात्रिस्तथा कृष्ण इत्यादिप्रमाणप्रतिपन्नः पुराणेषु दक्षिणमार्गो निर्दिष्टो धूमादिश्चन्द्रान्तः । पितृयाणोऽप्यन्यः । संवत्सरावयवभूतः षण्मासात्मा दक्षिणायननिर्दिष्टोऽप्यन्यः । तथाऽपि दक्षिणायनशब्देन द्वयोरपि व्यवह्रियमाणत्वात्कालमार्गयोरेकीकृत्य व्यवहार उपपद्यत इति द्रष्टव्यम् ॥ ९ ॥

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया
विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते ।

अथशब्दो वाक्यान्तरोपक्रमे । ये तावत्किं प्रजया करिष्याम इति विरक्ता ऋषयः कायक्लेशादिलक्षणेन तपसा स्त्रीसङ्गराहित्यलक्षणेन ब्रह्मचर्येणाऽऽस्तिक्यबुद्धिलक्षणया श्रद्धया प्रत्यगात्मविद्यया परमात्मानमुपास्यार्चिरादिनोत्तरेणायनेनाऽऽदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति" [ छा० ५।१०।३ ] इत्युक्तप्रकारेण ब्रह्मप्राप्तिद्वारभूतमादित्यमभिजयन्ते प्राप्नुवन्तीत्यर्थः । 'आदित्यो ह वै प्राणः'[प्र०१।५]इत्युक्तेः प्राणसंबन्ध्यपि भवति ।

अन्वेष्टव्यतया निर्दिष्टमात्मानं स्तुवंस्तेषामपुनरावृत्तिं दर्शयति—

एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परा-
यणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः ।

आयतनशब्दापेक्षयैतदिति नपुंसकलिङ्गनिर्देशः । प्राणानां प्राणभृतामायतनमाधारभूतम् । तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः [कौ०१] इति परमात्मनः सकलचेतनाधारकत्वोक्तेः । एतत्परायणं परमं प्राप्यमित्यर्थः । एतस्मान्न पुनरावर्तन्त उपासका इति शेषः । उत्तरेण मार्गेण गता 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' [ गी० ८।१६ ] इत्युक्तरीत्या परमात्मानं प्राप्य न निवर्तन्त इत्यर्थः । एष निरोधः । एष प्रजाकामो वै प्रजापतिरिति प्राक्प्रजापतिशब्दनिर्दिष्टः परमात्मा स्वप्राप्तस्य पुनरावृत्तिनिरोधकारी । अतस्तं परमात्मानं प्रजापतिशब्दितं प्राप्तस्य तदुपासकस्यापुनरावृत्तिरुपपद्यत इति भावः । अत्रैष इत्येतच्छ-

ब्देन प्रजापतिपरामर्शात्। आत्मानमन्विष्येत्यात्मशब्दोऽपि प्रजापतिपर एव। अत एवैतत्सर्वमभिप्रेत्य सर्वव्याख्यानाधिकरणे व्यासार्यैः 'तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते। एतस्मान्न पुनरावर्तन्ते' [प्र० १।१०]। इत्यर्चिरादिगत्याऽपुनरावृत्तिप्रतिपादनात्। प्रजाकामो वै प्रजापतिरिति प्रजापतिशब्दनिर्दिष्टः परब्रह्मेति प्रतिपादितमिति द्रष्टव्यम्।

तदेष श्लोकः॥ १०॥

तत्तस्मिन्संवत्सरात्मनि प्रजापतौ वक्ष्यमाणश्लोक इत्यर्थः॥ १०॥

पञ्चपादं पितरं द्वादशाकृतिं दिव
आहुः परे अर्धे पुरीषिणम्॥

वत्सरसंवत्सरपरिवत्सरेडावत्सरानुवत्सररूपाः पञ्च पादा यस्य स पञ्चपादः। अथ वा हेमन्तशिशिरयोरेकीकरणात्पञ्चर्तवः संपद्यन्ते ते पादा यस्य स पञ्चपादस्तम्। पितरं सर्वस्य जनकम्। द्वादशाकृतिं द्वादशमासाकृतिम्। दिवः स्वर्गात्परे परस्मिन्नर्धे स्थाने। पुरीषिणम्। पुरीषशब्देन स्वर्गभूमिसंनिहितं ब्रह्माण्डगोलकावरणमुच्यते तदस्य स्थानत्वेनास्तीति पुरीषिणमाहुरित्यन्वयः

अथेमे अन्य उ परे विचक्षणं सप्त-
चक्रे षडर आहुरर्पितम्*॥ ११॥

अथशब्दः पक्षान्तरपरिग्रहे। उशब्दोऽवधारणे। परशब्द उत्कृष्टवचनः। पूर्वोक्तेभ्योऽन्य उत्कृष्टा इमे कालतत्त्वविद आदित्यादिग्रहसप्तकलक्षणचक्रयुक्तऋतुलक्षणारषट्कयुक्ते संवत्सराख्ये रथे जगत्सर्वं विचक्षणं कुशलं निश्चलं यथा भवति तथाऽर्पितमित्याहुः॥ ११॥

यथा संवत्सरो रयिप्राणात्मना विभक्त एवं मासोऽपि विभक्त इत्युपासनार्थं प्रदर्शयति—

मासो वै प्रजापतिस्तस्य कृष्ण-
पक्ष एव रयिः शुक्लपक्षः प्राणः।

स्पष्टोऽर्थः।

---

* आनन्दाश्रमस्थपुस्तके — इति। इति विद्यते।

तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥

यस्माच्छुक्लः प्राणतयोत्कृष्टस्तस्मादृषयोऽतीन्द्रियार्थद्रष्टारः सर्वेऽपि शुक्लपक्ष एव शोभनानि कर्माणि कुर्वन्ति । इतरेऽनृषयोऽज्ञाः पुनर- प्राणतयाऽसारभूते कृष्णपक्षे कुर्वन्तीत्यर्थः ॥ १२ ॥

अमुमेव विभागमहोरात्रेऽप्युपासनाय प्रदर्शयति—

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः ॥

स्पष्टोऽर्थः ।

प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संप्रयुज्यन्ते ॥

यस्माद्धेतोरह्नः प्राणरूपत्वमत एव रत्या रत्यर्थं प्रयोजनस्य हेतुत्वविवक्षया तृतीया । प्राणभूतेऽह्नि स्त्रीभिर्ये संयुज्यन्ते त एते प्राणमेव प्रस्कन्दन्ति प्रकर्षेण शोचयन्ति प्राणापचारात्प्राणमेव निघ्नन्तीत्यर्थः ।

ननु तर्हि स्वयोषिद्गमनं गृहस्थैर्न कार्यमित्याशङ्क्य रात्रौ कार्यमित्याह—

ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

यद्रात्रौ रत्या संयुज्यन्ते रत्यर्थं रात्रौ स्त्रीसंप्रयोगो ब्रह्मचर्यमेव मैथुनमेव न भवतीत्यर्थः । तन्न दोषायेति यावत् ॥ १३ ॥

ननु प्रकृतिपुरुषकालात्मकं ब्रह्म कथं प्रजानामुपादानमित्युच्यते । अन्नपरिणामभूतस्य रेतस एव प्रजोपादानत्वदर्शनादित्याशङ्क्याऽऽह—

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मा-

दिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥

अन्नावस्थं तदुत्पन्नरेतोऽवस्थं च यतः प्रजापतिशब्दितं ब्रह्मैवातः प्रकृतिपुरुषसंवत्सरमासादिकालान्नरेतोऽवस्थारूपाद्ब्रह्मणः सर्वाः प्रजाः प्रजायन्त इति प्रजापतिशब्दितस्य ब्रह्मण उपादानत्वमुपपद्यत इति भावः ॥ १४ ॥

तत्प्रसङ्गादमुमुक्षुनिन्दापूर्वकं मुमुक्षुं स्तौति—

तद्ये हवै [१]प्रजापतिव्रतं चरन्ति ते मिथु-

नमुत्पादयन्ते । तेषामेवैष [२]लोकः ।

तस्माद्येऽन्नं वै प्रजापतिरिति प्रजापतिशब्दितस्यान्नस्य व्रतं भक्षणं

---

१ आनन्दाश्रमस्थपुस्तके एतौ पाठौ विद्येते । १ तत्प्रजा' । २ ब्रह्मलोकः ।

व्रतत्वेनानुतिष्ठन्ति येऽन्नभक्षणशीला ब्रह्मचर्यरहितास्त एव प्रजा उत्पादयन्ते । एष लोकः पुत्रपश्वन्नादिलक्षणः कार्यभूतब्रह्मरूपो लोकस्तेषामेव, न त्वात्मकामानामिति भावः ।

येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्
॥१५॥ तेषामसौ विरजो ब्रह्मलोको न येषु
जिह्ममनृतं न माया चेति ॥ १६ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि प्रथमः प्रश्नः ॥ १ ॥

---

येषां कायशोषणाख्यं तपो न भक्षणशीलता मैथुनवर्जनं येषु च सत्यवचनं प्रतिष्ठितं येषु च, मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनामित्युक्तकौटिल्यलक्षणजिह्मत्वं नास्ति भूताहितवचनलक्षणमसत्यवचनं नास्ति तेषामसौ विरजो निर्दोषो ब्रह्मैव लोको ब्रह्मलोकः । तथैव व्यासार्यैः सर्वव्याख्यानाधिकरणे विवृतत्वादिति द्रष्टव्यम् । इति शब्दः प्रतिवचनसमाप्तौ ॥ १५ ॥ १६ ॥

इति श्रीमद्रामानुजकृतौ प्रश्नोपनिषत्प्रकाशिकायां
प्रथमः प्रश्नः ॥ १ ॥

---

देहेन्द्रियमनःप्राणादिविलक्षणप्रत्यगात्मशोधनाय प्रश्नानवतारयति । उक्तं च व्यासार्यैरुत्तरेषु खण्डेषु प्रत्यगात्मा विशोध्यत इति—

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ ।

कबन्धिप्रश्नानन्तरं पिप्पलादं भार्गवो वैदर्भिः पृष्टवान् ।
किमिति—

२. भगवन्कत्येव देवाः प्रजां विधारयन्ते कतर
एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति॥ १॥

हे भगवन्किंसंख्याका देवाः स्थावरजङ्गमात्मिकां प्रजां बिभ्रति । एष्वेव देवेषु कतरे देवा एतच्छरीरं तत्कार्यं प्रकाशयन्ते कः पुनरेतेषां श्रेष्ठ इति ॥ १ ॥

---

तस्मै स होवाच ।

स्पष्टोऽर्थः । मुख्यप्राणस्यैव धारकत्वप्रकाशकत्वश्रेष्ठत्वानि वक्तुमाख्यायिकामाह—

आकाशो ह वा एष देवो वायुरग्निरापः
पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च ।

ह वा इति प्रसिद्ध्यतिशये । एष प्रसिद्ध आकाशः । दीव्यति गच्छतीति देवो गमनशीलस्तादृशो वायुश्चाग्निरापः पृथिवी । स्पष्टोऽर्थः । वाक्छब्देन कर्मेन्द्रियाणि सर्वाण्युपलक्ष्यन्ते । चक्षुः श्रोत्रशब्देन ज्ञानेन्द्रियाणि ।

ते प्रकाश्याभिवदन्ति वयमेतद्बाण-
मवष्टभ्य विधारयाम इति ॥ २ ॥

आकाशादयः सर्वे मिलिताः पुरोवर्तिशरीरं प्रदर्श्याऽभितः स्थित्वा वदन्ति स्म किमिति वयं बाणवत्संचारशीलमेतत्पुरोवर्तिशरीरमवलम्ब्य विधारयामः । आकाशादिविविधकार्यक्षमतया धारयाम इत्यर्थः ॥ २ ॥

तान्वरिष्ठः प्राण उवाच ।

इत्यर्थः ।

किमिति—

मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं
विभज्यैतद्बाणमवष्टभ्य धारयामीति ।

हे आकाशादय ईदृशीं विपरीतबुद्धिं मा गच्छत । अहमेव स्वात्मानं प्राणापानव्यानसमानोदानरूपेण पञ्चधा विभज्य धारयामीति । एवं वदतो मुख्यप्राणस्यायं भावः—हे आकाशादयो भवन्त आकाशादिकप्रातिस्विककार्यक्षमा न तु सर्वकार्यक्षमाः । अहं तु भवतामपि कार्यनिमित्तत्वाद्भवत्कार्यक्षमः । क्रियमाणे जीवने तु भवत्सु न कोऽपि समर्थः ।

आनन्दाश्रमस्थपुस्तके—१ प्रविभ° । २ विधार° ।

तेऽश्रद्दधाना बभूवुः ॥ ३ ॥

ते तद्वाक्ये विश्वासं न कृतवन्तः ॥ ३ ॥

सोऽभिमानादूर्ध्वमुत्क्रमत इव ।

ततः स प्राण एषां गर्वमवलोक्याहंकारावेशादष्टोत्तरशतमर्मस्थानानामुपरि स्वसामर्थ्यं प्रकटयितुं स्वस्थानात्किंचिदुदचलत् । इवशब्दोऽल्पार्थे । साक्षादुत्क्रमणेऽप्रतिसमाधेयः—शरीराविनाशः स्यादिति मत्वोत्क्रमणमिव कृतवानिति भावः ।

तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते ।

तस्मिन्मुख्यप्राण उत्क्रामतीतरे सर्वे प्राणा उदक्रामन् ।

तस्मिंस्तु प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते ।

शरीरपातभीत्या पुनः प्रतिष्ठां प्राप्नुवति सतीतरेऽपि प्रतिष्ठिता इत्यर्थः । तत्र दृष्टान्तमाह—

तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं
सर्वा एवोत्क्रामन्ते तस्मिंस्तु प्रतिष्ठमाने सर्वा
एव प्रतिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ।

यथा मधुकरमक्षिकास्तत्र श्रेष्ठां मक्षिकामुत्क्रामन्तीमनूत्क्रामन्ति । प्रतिष्ठितायां तस्यां स्वयं प्रतिष्ठिता भवन्ति । एवं वागाद्या मुख्यप्राणानुविधायिनोऽभवन्नित्यर्थः ।

ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

मुख्यप्राणमाहात्म्यदर्शनप्रीता वागाद्याः प्राणा मुख्यप्राणं तुष्टुवुरित्यर्थः । स्तौतेर्व्यत्ययाच्छ्नुः ॥ ४ ॥

स्तुतिमेवाऽऽह—

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायु-
रेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥

एष मुख्यप्राणोऽग्निरूपेण तपति । एष प्राण एव सूर्यः । सर्वेषां प्राणायत्तस्थितिकत्वात् । यदधीना यस्य सत्ता तत्तदेवेति भण्यत इति रीति-

आनन्दाश्रमस्थपुस्तके-१ तस्मिंश्च ।

अनुसृत्य सामानाधिकरण्यव्यपदेशो दृष्टः। रयिर्देवश्चन्द्रमा इति यावत्। सदसच्छब्दौ वर्तमानावर्तमानपरौ प्रत्यक्षाप्रत्यक्षपरौ वा चेतनाचेतनपरौ वा। स्थूलसूक्ष्मपरौ वा। अमृतशब्दो मोक्षपरः। तस्यापि तदधीनत्वादिति भावः॥ ५॥

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।

चक्रस्य नाभिनेमेरन्तरालवर्तीनि काष्ठानि अरशब्देनोच्यन्ते। चक्रस्य मध्यप्रदेशो नाभिशब्देनोच्यते। यथाऽरा नाभावर्पिता एवमस्मिन्प्राणे सर्वं प्रतिष्ठितमित्यर्थः।

सर्वशब्दार्थं स्पष्टयति—

ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च॥ ६॥

अत्र ब्रह्मक्षत्रशब्दः स्थावरजङ्गमात्मकप्राणिमात्रोपलक्षकः॥ ६॥

एवमेव इत्यङ्गुल्या निर्दिश्य परस्परं दर्शयित्वा तद्गुणान्संकीर्त्य पश्चात्तमेव मुख्यप्राणमभिमुखीकृत्य स्तुवन्ति—

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे।

त्वं प्रजानां रक्षकः सन्प्राणादिवायुरूपेण गर्भे संचरसि। तथा गर्भोत्पादकतया तत्पोषकतया च पितृरूप एव वर्तमान एव स्वमुत्पादकत्वप्रातिलोम्येन पुत्रादिरूपेण जायसे।

तुभ्यं प्राण प्रजास्त्विमा बलिं हर-
न्ति यः प्राणैः प्रतितिष्ठसि॥ ७॥

हे प्राण स्थावरजङ्गमात्मिका इमाः प्रजास्तुभ्यं त्वदर्थास्त्वच्छेषभूता यतो बलिमन्नादिकं त उपहरन्ति। यस्त्वं प्राणादिव्यापारैः सर्वत्र प्राणिषु प्रतिष्ठितोऽसीत्यर्थः॥ ७॥

देवानामसि वह्नितमः।

हविषां वाहकतमः।

पितॄणां प्रथमा स्वधा।

मुख्यः पितृप्रीतिहेतुभूतस्त्वमेवेत्यर्थः।

ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥

अथर्वाङ्गिरसामृषीणां सत्यमुत्कृष्टं चरितं नित्यनैमित्तिकादिलक्षणं कर्म त्वमसीत्यर्थः ॥ ८ ॥

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।

हे प्राण त्वमिन्द्रः परमेश्वर इत्यर्थः । इदि परमैश्वर्ये इति हि धातुः । तेजसा सर्वसंहारलक्षणेन त्वं रुद्रो रोदनहेतुः । स्थितिकाले परिरक्षकश्चेत्यर्थः

त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥

ज्योतिषां प्रकाशकानां पतिः श्रेष्ठः सूर्यो भूत्वाऽन्तरिक्षे चरसि ॥ ९ ॥

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥१०॥

हे प्राण यदा त्वं मेघरूप्यभितो वर्षसि तदा ते त्वदीया इमाः प्रजा आनन्दिन्यो भवन्ति कस्य हेतोः कामायाभिलषितार्थाय पर्याप्तमन्नं भविष्यतीति । 'तद्यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यति' इति छान्दोग्ये[७।१०।१] श्रवणादिति द्रष्टव्यम् ॥ १० ॥

व्रात्यस्त्वं प्राणैकर्षिरत्ता विश्वस्य सत्पतिः ।

हे प्राण संस्कारहीनो ब्राह्मणोऽपि त्वमेव मुख्यो मन्त्रद्रष्टर्षिरपि त्वमेव विश्वस्यात्ता संहर्ता च त्वमेव सतां साधूनां रक्षकोऽपि त्वमेव ।

वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः ॥११॥

वयं त आद्यस्यादनीयस्य भोग्यस्य दातारः करप्रदाः किंकरा इति यावत् । हे मातरिश्वंस्त्वं नः पिताऽसि पोषकोऽसीत्यर्थः । मातरिश्वन इत्यत्र नकारद्वित्वाश्रवणं छान्दसत्वाद्द्रष्टव्यम् ॥ ११ ॥

या च ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या च मनसि संतता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥

वागादीन्द्रियेषु तत्तदिन्द्रियनियमनानुकूला शक्तिः सततं प्रतिष्ठितां तां शिवां शोभनां कुरूत्क्रमणेनाशिवां मा कुरूत्क्रमणं मा कार्षीरित्यर्थः ॥ १२ ॥

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।
मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां विधेहि नः ॥१३॥
इत्यथर्ववेदीयप्रश्नोपनिषदि द्वितीयः प्रश्नः ॥ २ ॥

---

जगदिदं सर्वं प्राणस्य वशे वर्तते । वश इच्छा तदधीनमिति यावत् । यच्च त्रिदिवे स्वर्गादिलोके प्रतिष्ठितं तदपि प्राणाधीनं तस्मात्पुत्रान्मातेवास्मान्रक्षस्वास्माकं स्वस्वकार्यनिष्पादसामर्थ्यलक्षणाः श्रियस्तदनुकूलप्रज्ञां च विधत्स्व ॥ १३ ॥

इति श्रीमद्रामानुजकृतौ प्रश्नोपनिषत्प्रकाशिकायां
द्वितीयः प्रश्नः ॥ २ ॥

---

अथ हैनं कौशल्यश्चाऽऽश्वलायनः पप्रच्छ ।

स्पष्टोऽर्थः ।

भगवन्कुत[1] एष प्राणो जायते कथमाया-
त्यस्मिञ्शरीर[3] आत्मानं वा प्रविभज्य कथं
वा प्रतितिष्ठते केनोत्क्रमते कथं बाह्य-
मभिधत्ते कथमध्यात्ममिति ॥ १ ॥

प्रतितिष्ठते प्रतितिष्ठतीत्यर्थः । बाह्यमभिधत्ते बाह्यरूपेण संनिधत्त इत्यर्थः । बाह्यमित्यस्य संनिधानक्रियाविशेषणत्वात् ॥ १ ॥

तस्मै स होवाच ।

स्पष्टोऽर्थः ।

अतिप्रश्नान्पृच्छसि ब्रह्मिष्ठोऽसि तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

प्रश्नानतिक्रम्य वर्तमानान्प्रश्नायोग्यान्रहस्यानर्थान्पृच्छसि तस्मात्त्वं ब्रह्मिष्ठोऽसि प्रायेण ब्रह्मविदसि न प्राकृत इति यावत् । अतस्तेऽहं योग्यत्वाद्ब्रवीमीत्यर्थः ॥ २ ॥

प्रश्नस्योत्तरमाह—

आत्मन एवैष प्राणो जायते ।

परमात्मन एवैष प्राणो जायत इत्यर्थः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' [मु० २।१।३]इति श्रुतेरिति द्रष्टव्यम् ।

---

१ आनन्दाश्रमस्थपुस्तके— १ ष्ठो सीति ।

कथमायात्यस्मिञ्शरीर इत्यस्योत्तरमाह—

(2) यथैषा पुरुषे छायैतस्मिन्नेतदाततं
मनोकृतेनाऽऽयात्यस्मिञ्शरीरे॥ ३॥

यथा पुरुषे गच्छति छायाऽपि सहैव गच्छति न हि च्छायागमने सामर्थ्यन्तरमस्ति । एवमेतस्मिन्पुरुषे जीव एतन्मनोऽकृतेनायत्नेन कृतशब्दो यत्नार्थको यत्नमन्तरेणाऽऽततमविनाभावेन संश्रितमेवमेव प्राणोऽप्यकृतेनायत्नेनास्मिञ्छरीर आयाति । मनःप्राणयोः पुरुषच्छायावत्पुरुषाविनाभूतत्वात्पुरुषेण सहैव प्राणस्य संबन्धोऽतो न प्राणागमने पृथक्कारणमपेक्षितमिति भावः ॥ ३ ॥

आत्मानं प्रविभज्य कथं प्रतितिष्ठत इति तृतीयप्रश्नोत्तरमाह—

(3) यथा सम्राडेवाधिकृतान्विनियुङ्क्ते । एतान्ग्रामानेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव संनिधत्ते ॥ ४ ॥

पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातितिष्ठते मध्ये समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति॥५॥

यथा राजा कार्येष्वधिकृतान्स्वसेवकानिमान्ग्रामानधितिष्ठेमं ग्राममधितिष्ठेति पृथक्पृथग्विनियुज्य तन्मुखेन तेषु यथा संनिधत्त एवमेवैष मुख्यप्राण इतरेषु प्राणेषु ग्रामस्थानीयेषु स्वांशभूतापानव्यानादिमुखेन संनिधत्तेऽधितिष्ठतीति यावत् । तत्र पायुश्चोपस्थं च पायूपस्थं तस्मिन् । अपानं मूत्रपुरीषापकर्षणं कुर्वंस्तस्मिन्प्रतितिष्ठति प्रतिष्ठितो भवति तदधिष्ठाता भवतीत्यर्थः । मुखनासिकाभ्यां निर्गत्य वायुः प्राणरूपः संश्चक्षुःश्रोत्रे चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तस्मिन्प्रतितिष्ठति प्रतिष्ठितो भवति तदधिष्ठाता भवतीत्यर्थः । मध्ये तु समानः सन्नवतिष्ठते । एष हि समानो हुतं भुक्तमन्नादिकं समं नयति सप्तधातुसाम्यं नयति विभागं करोतीति यावत् । तस्मात्समानवायोर्हेतोर्जाठराग्नेः सप्तार्चिषः कालीत्येवमाद्याः प्रादुर्भवन्ति ॥ ४ ॥ ५ ॥

१ आनन्दाश्रमस्थपुस्तके सर्वे नू ।

हृदि ह्येष आत्मा । अत्रैकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति तासु व्यानश्चरति ॥ ६ ॥

एष जीवात्मा हृदि हृदये यत्र समानरूपेण प्राण आस्ते तत्र स्वयमपि वर्तते । अत्र हृदये नाडीनामेकाधिकशतं वर्तते तासां नाडीनां मध्ये एकैकस्या द्वासप्ततिः प्रभेदा भवन्ति । एकैकं द्वासप्ततिप्रभेदं प्रतिशाखाभूतनाडीसहस्राणि शतंशतं भवन्ति तासु नाडीषु व्यानरूपश्चरतीत्यर्थः ॥ ६ ॥

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥

अथेति वाक्योपक्रमे । एकया कयाचिन्नाड्योर्ध्वमुख उदानः पुण्येन हेतुना पुण्यं स्वर्गादिलोकं पापेन हेतुना पापं नरकादिलोकमुभाभ्यामेव मनुष्यलोकं नयति ॥ ७ ॥

अथाऽऽत्मानं प्रविभज्य कथं प्रतितिष्ठतीति प्रश्नस्य यथा सम्राडेवेत्यारभ्योभाभ्यामेव मनुष्यलोकमित्येतदन्तं प्रतिवचनं तन्मध्येऽथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयतीत्यनेन केनोत्क्रमत इति चतुर्थप्रश्नस्योत्तरमुक्तं भवति । कथं बाह्यमभिधत्त इत्यस्योत्तरमाह—

आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः ।

चाक्षुषं प्राणं चक्षुर्गोलकवर्तीन्द्रियमालोकाख्यसहकारिप्रसादेनानुगृह्णानो बहिरादित्यरूपेणोदेति । यद्यपि प्राणस्याऽऽदित्यात्मकत्वं न संभवति तयोर्भेदात् । तस्यापि प्राणकल्पत्वाद्वा सर्वत्र सत्त्वेनाभेदोपचाराद्वोपासनार्थतया वा बाह्यानामादित्यादीनां प्राणात्मकत्वोक्तिरिति द्रष्टव्यम् ।

पृथिव्यां या देवता सैषा पुरुषस्यापानमुपष्टभ्य ।

पृथिव्यां प्राणकलारूपा देवता सा पुरुषस्यापानवाय्वधिष्ठितपायूपस्थेन्द्रियेऽनुगृह्णाना वर्तत इत्यर्थः ।

आनन्दाश्रमस्थपुस्तके—१ तदेक° । २ °वन्त्यासु । ३ °नमवष्ट°।

अन्तरा यदाकाशः स समानः।

आकाशाधिष्ठातृप्राणकलारूपाऽऽकाशस्यौपचारिक्यभेदोक्तिर्द्रष्टव्या। एवमुत्तरत्रापि। मध्ये तु समानः। एष एतद्धुतं नयतीत्यध्यात्मम्। प्राणापानस्थानमध्यवर्तितया हि समानो निर्दिष्टः। बाह्याकाशस्यापि बाह्यप्राणरूपस्याऽऽदित्यस्य बाह्यापानरूपस्य पृथिव्याश्च मध्यवर्तितया समानत्वं युज्यत इति भावः।

वायुर्व्यानः॥ ८॥

बाह्यो वायुस्त्वगिन्द्रियाद्यनुग्रहतो व्यानरूपः॥ ८॥

तेजो ह वा उदानः॥

बाह्यं तेज उन्नयनहेतुत्वादुदानः।

तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः॥ ९॥

यच्चित्तस्तेन स प्राणमायाति प्राणस्तेजसा युक्तः॥

सहाऽऽत्मना यथासंकल्पितं लोकं नयति॥ १०॥

यस्माद्धेतोस्तेजस एवोदानशब्दितोन्नयनं तस्मादेवोपशान्ततेजा अपगतदेहौष्ण्यः संमुमूर्षुर्जीवो यच्चित्तो यस्मिंश्चित्तं यस्य स यच्चित्तः। यत्काम इति यावत्। यादृशमनुष्यदेवादिजन्मकामो भवति तत्कामनावशेन पुनर्भवशब्दितां पुनरुत्पत्तिं प्राप्तुं वाङ्मनसि संपद्यते 'वाङ्मनसि दर्शनाच्छब्दाच्च' [ब्र०सू०४।२।१] इतिश्रुतिसूत्रतद्भाष्योक्तरीत्या मनसा संश्लेषविशेषमापन्नैर्वागादिभिर्दशभिरिन्द्रियैः सहितं प्राणं संमुमूर्षुर्जीव आयाति यद्यपि 'इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति'[बृ०४।३।३८] इतिमुख्यामुख्यप्राणानां जीवापगम एव श्रूयते न तु जीवस्य प्राणोपगमः। सूत्रितं च 'सोऽध्यक्षे तदुपगमादिभ्यः' [ब्र०सू०४।२।४] इति। तदर्थस्तु तदधिकरणभाष्य उक्तः–तत्र हि यथा वाङ्मनसि संपद्यते मनः प्राण इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोः संपत्तिः। तथा प्राणस्तेजसीति वचनात्तेजस्येव प्राणः संपद्यत इति पूर्वपक्षे सोऽध्यक्षे तदुपगमादिभ्य इति सिद्धान्तितम्। तस्यायमर्थः- स प्राणः करणाध्यक्षे जीवे संपद्यते कुतस्तदुपगमादिभ्यः। प्राणस्य तदुपगमस्तावच्छ्रूयते। एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमाय-

न्तीति [बृ० ४।४।३८] तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते । तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति [बृ० ४ । ४ । २ ] कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति [प्र० ६ । ३] जीवस्य प्राणेन सहोत्क्रान्तिप्रतिष्ठे श्रूयेते । ततश्च प्राणो जीवेन संयुज्यैव तेजसि संबध्यते यथा यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति व्यपदेशोपपत्तिः । तथा प्राणस्य जीवेन संयुज्य तेजःसंपत्तावपि प्राणस्तेजसीत्युक्तिर्न विरुध्यत इति स्थितम् । तथाऽप्यस्य प्राणप्रशंसापरत्वाज्जीवस्य प्राणोपगमोक्तिरुपपद्यत इति द्रष्टव्यम् । अनन्तरं 'प्राणस्तेजसि तेजः परस्यां देवतायां' [छा० ६।८।६] इति श्रुत्युक्तरीत्या तेजसा परमात्मना च संयुक्तः प्राणस्तत्तज्जीवात्मसंकल्पानुसारेण तं तं लोकं म्रियमाणं नयति ततश्च तेजसा सहितस्यैव प्राणस्योन्नयनहेतुत्वात्तेजसोऽप्युन्नयनहेतुत्वेनोदानत्वं युक्तमिति भावः । यद्यपि प्राणस्तेजसीत्यत्र तेजःशब्देन सर्वाणि भूतान्युच्यन्ते न तेजोमात्रमिति 'भूतेषु तच्छ्रुतेः' [ब्र० सू०४।२।५ ।] 'नैकस्मिन्दर्शयतो हि' [ब्र० सू० ४ । २ ६ ] इति सूत्रभाष्ययोः प्रतिपादितं तथाऽपि भूतान्तरसंसृष्टमेव तेजस्तेजःशब्देनाभिधीयत इति भाष्योक्तेस्तेजसः प्राधान्यात्तदुक्तिरुपपद्यत इति द्रष्टव्यम् ॥ ९ ॥ १० ॥

य एवं विद्वान्प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति ॥

एवमुत्पत्त्यागमनप्रतिष्ठादिप्रकारेण प्राणं य उपास्ते तस्य पुत्रपौत्रादिलक्षणप्रजाहानिर्न भवति परिशुद्धप्रत्यगात्मस्वरूपप्रतिपत्तिमुखेन ब्रह्मोपासनप्रीतिद्वारा मोक्षहेतुश्च भवतीति द्रष्टव्यम् ॥

तदेष श्लोकः ॥ ११ ॥

तत्प्राणवेदनमधिकृत्य प्रवृत्तोऽयं श्लोक इत्यर्थः ॥ ११ ॥

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा ।
अध्यात्मं चैव प्राणस्य विज्ञायामृत-
मश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि तृतीयः प्रश्नः ॥ ३ ॥

उत्पत्तिं प्राणस्य परमात्मन उत्पत्तिं मनसा सहाऽऽगमनमस्मिञ्शरीरे पायूपस्थादिस्थानेषु स्थितिं यथा सम्राडेवाधिकृतानित्युक्तं साम्यलक्षणं विभुत्वमध्यात्मं प्राणादिरूपेण पञ्चधा स्थितिं च शब्दसमुच्चितमादित्यादिरूपेण पञ्चधा बाह्यमवस्थानं च विज्ञायामृतं मोक्षमश्नुते प्राप्नोति । द्विर्वचनं प्रतिवचनसमाप्तिद्योतनार्थम् ॥ १२ ॥

इति श्रीमद्रामानुजकृतौ प्रश्नोपनिषत्प्रकाशिकायां तृतीयः प्रश्नः ॥

---

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ ।

स्पष्टोऽर्थः ।

भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति ।

सुप्ते सतीति शेषः । शिष्टं स्पष्टम् ।

कान्यस्मिञ्जाग्रति ।

अत्रापि सुप्ते सतीति शेषः ।

कतर एष देवः स्वप्नान्पश्यति ।

एष द्योतनादिगुणयोगाद्देवो जीवः कतरः कीदृशः सन्स्वाप्नाव्यथार्थान्पश्यतीत्यर्थः ।

कस्यैतत्सुखम् ।

कस्य हेतोरेतद्वैषयिकं सुखमित्यर्थः ।

कस्मिन्नु सर्वे प्रतिष्ठिता भवन्ति ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

तस्मै स होवाच ।

स्पष्टोऽर्थः ।

यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकी भवन्ति ताः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकी भवति ।

यथा सायं कालेऽस्तं गच्छतः सूर्यस्य किरणा नाना दिक्षु प्रसरणं

---

आनन्दाश्रमस्थपुस्तके—१ सर्वाणिष्टे° । २ भवन्तीति । ३ पुनः पुन° । ४ चरन्त्ये° ।

विनाऽऽदित्यमण्डल एकी भवन्ति पुनश्चोदयतः सूर्यस्य किरणा नाना दिक्षु प्रसरन्तः प्रकाशका भवन्ति । एवमेवैतत्सर्वमिन्द्रियजातं पर इतरेभ्य उत्कृष्टे देवे द्योतनादिगुणयुक्ते मनस्येकी भवति । स्वस्वव्यापाराभिमुख्यविरोधिसंश्लेषविशेषयुक्तं भवतीत्यर्थः ।

तेन ह्येष पुरुषो न शृणोति ।

तेन श्रोत्रादीन्द्रियाणामुपरतत्वेनेत्यर्थः । शिष्टं स्पष्टम् ।

न पश्यति न जिघ्रति न रसयति न स्पृशति नाभिवदते नाऽऽदत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥

आनन्द उपस्थेन्द्रियकार्यं विसर्गस्त्वपानकार्यम् । नेयायते न गच्छतीत्यर्थः । स्वपितीत्याचक्षत इत्यनेन कानि स्वपन्तीति प्रश्नस्य बाह्यज्ञानेन्द्रियकर्मेन्द्रियाणि स्वपन्तीत्युत्तरमुक्तं भवति प्रत्येकमेकत्वाभिप्रायेण स्वपितीत्येकवचनम् । शिष्टं स्पष्टम् ॥ २ ॥

कान्यस्मिञ्जाग्रतीत्यस्योत्तरमाह—

प्राणाग्नय एवैतस्मिन्पुरे जाग्रति

प्राणापानादिरूपा अग्नय एवैतस्मिन्पुरशब्दनिर्दिष्टे शरीरे जागरं कुर्वन्तीत्यर्थः । स्वापदशायां जाग्रत्सु प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेषूपासनार्थमग्निहोत्रसंपत्तिं दिदर्शयिषुस्तत्र व्याप्रियमाणं मन एव यजमानोऽपानो मूलाधारस्थतया गार्हपत्यस्तत्संनिहितो व्यानोऽन्वाहार्यपचनशब्दितो दक्षिणाग्निरपानवायुमूलकः प्राणो गार्हपत्यात्प्रणीयमानाहवनीयतुल्यतयाऽऽहवनीयस्तदाधारका उच्छ्वासनिश्वासौ द्वे आहवनीये इति निर्दिष्टाहुतिद्वयमुच्छ्वासनिश्वासहेतुभूतः समानो वायुराहुती समं नयतीतिनिर्देशयोग्योऽध्वर्युरुदानवायुस्तु यजमानस्य लोकान्तरोन्नयनहेतुत्वादुदान इत्यग्निहोत्राहुत्यवयवभूतान्यजमानाग्नित्रयाहुतिद्वयाध्वर्युकर्मफलभूतानष्टापि पदार्थान्प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेष्वष्टसु दर्शयति—

गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥

---

आनन्दाश्रमस्थपुस्तके—१ तर्स्मे । २ °यते । ३ °शतेना° ।

यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति समानः। मनो ह वाव यजमान इष्टफलमेवोदानो य एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥

अत्र यद्यपि जीवस्यैव, 'एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' [ छा० ८।३।२ ] इतिब्रह्मगमनं श्रूयते न मनसस्तथाऽपि मनसः पुरीतद्गमनश्रवणात्तद्गतब्रह्मगमयितृत्वोक्तिरुपपद्यत इति द्रष्टव्यम् ॥ ३ ॥ ४ ॥

कतर एष देवः स्वप्नान्पश्यतीत्यस्योत्तरमाह—

अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुश्रृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥ स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्पश्यति।

अत्रास्मिन्नवसर एष देवो जीवः स्वप्ने करितुरगादिलक्षणं महिमानमनुभवति पश्यति जागरे प्राग्यद्दृष्टं तमेवार्थमनुपश्यति अनु पश्चात्पश्यति अनुभवति दृष्टं दृष्टं भूयो दृष्टमित्यर्थः। श्रुतमेवार्थमनुशृणोति देशान्तरेषु दिगन्तरेषु प्रत्यहमनुभूतमर्थं पुनः पुनरनुभवति दृष्टं श्रुतमेवानुभवतीत्ययमपि नियमो नास्ति। कदाचित्पूर्वाननुभूतमपि शरीरच्छेदनादिकमनुभवति विद्यमानं चानुभवति अविद्यमानं चानुभवति ( सर्वः पश्यति ) सर्वः सन्पश्यति द्रष्टा श्रोता घ्राता गन्ता वक्ता चेत्यादिसर्वरूपः सन्पश्यतीत्यर्थः। तदानीं जागरीयबाह्यज्ञानकर्मेन्द्रियाणामुपरतव्यापारत्वेऽपि स्वाप्निकैरीश्वरसृष्टैः शरीरेन्द्रियैर्द्रष्टृत्वादिमान्सन्ननुभवतीति भावः ॥५॥

एतस्मिन्नन्तरे 'सता सोम्य तदा संपन्नो भवति तेजसा हि तदा संपन्नो भवति' [ छा० ६।८।१ ] इतिश्रुत्युक्तरीत्या परप्रकाशकतया तेजःशब्दितेन परमात्मनाऽभिभूतो भवति संपन्नो भवतीति संपरि-

भ्वक्तो भवतीति यावत् । तदा स्वाप्नान्पदार्थान्न पश्यतीत्यर्थः । ततश्च कतर एष देवः स्वप्नान्पश्यतीति प्रश्नस्य ब्रह्मसंपत्तिविरहदशायां मनोमात्रपरिशेषसमये स्वाप्नान्पदार्थान्पश्यतीत्युत्तरमुक्तं भवति ।

कस्यैतत्सुखं भवतीत्यस्योत्तरमाह

4 अथ यदैतस्मिञ्छरीर एतत्सुखं भवति ॥ ६ ॥

यत्सुखं भवति तदेतस्मिञ्छरीरे सत्येव भवतीत्यर्थः । शरीरमेव वैषयिकसुखहेतुरित्युक्तं भवति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [ छा० ८।१२।१ ] इति श्रुतेरिति द्रष्टव्यम् ॥ ६ ॥

कस्मिन्सर्वे प्रतिष्ठिता भवन्तीत्यस्योत्तरमाह—

5 स यथा सोम्य वयांसि वासो वृक्षं संप्रतिष्ठन्ते ॥
एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥

वयांसि पक्षिणो वासोवृक्षं निवासवृक्षं प्रति संप्रतिष्ठन्ते स दृष्टान्तो यथैवं परमात्मनि सर्वं प्रतिष्ठितं भवतीत्यर्थः ॥ ७ ॥

सर्वशब्दार्थं प्रपञ्चयति—

पृथिवी च पृथिवी मात्रा च ॥

अत्र पृथिवीमात्राशब्देन पुराणेषु गन्धतन्मात्राशब्दाभिलप्या पृथिवी पूर्वावस्थोच्यते । । एवमुत्तरेष्वपि मात्राशब्देषु द्रष्टव्यम् ।

आपश्चाऽऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽऽकाशश्चाऽऽकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चाऽऽदातव्यं चोपस्थश्चाऽऽनन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहंकारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च

विधारयितव्यं च ॥८॥ एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षर आत्मनि संप्रतिष्ठते ॥ ९ ॥

चेतनाचेतनरूपः कर्तृकरणकर्मरूपः सर्वोऽपि प्रपञ्चस्तदाश्रित इति भावः । अत्र बोद्धा कर्ता विज्ञानात्मेति निर्देशादात्मनो ज्ञातृत्वमेव न ज्ञानरूपत्वमिति वदन्तस्तार्किकाश्च ज्ञानत्वमेव न ज्ञातृत्वमिति वदन्तो मृषावादिनश्च निरस्ता भवन्ति ॥ ८ ॥ ९ ॥

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्वो भवति ॥

छायाशब्देन ज्ञानसंकोचकं कर्मोच्यते । अच्छायमपापमित्यर्थः । अत एवाशरीरमलोहितं रूपादिशून्यं शुभ्रं स्वप्रकाशमक्षरं क्षरणशून्यं परमात्मानं वेदयते जानाति स हे सोम्य प्रियदर्शन, परमेवाक्षरं ब्रह्म वासुदेवं प्रतिपद्य सर्वज्ञो भवति । सर्वो भवति । सर्वकामयुक्तो भवति ।

तदेष श्लोकः ॥ १० ॥

तद्ब्रह्माभिमुखीकृत्यैष श्लोक इत्यर्थः ॥ १० ॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठन्ति यत्र । शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाऽऽविवेशेति ॥ ११ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि चतुर्थः प्रश्नः ॥ ४ ॥

सर्वैर्देवैर्वागादीन्द्रियैः सह मुख्यप्राणा भूतानि च महाभूतानि च जीवात्मा च यत्र प्रतितिष्ठन्ति तादृशं शुभ्रमक्षरं निर्विकारं परमात्मानं यो जानाति स सर्वज्ञः सर्वमपि कामजातमाविशति । 'सर्वेषु लोकेषु कामचारो भवति' [ छा० ७।२५।२ ] इतिश्रुत्युक्तरीत्या काम्यमानसर्वलोकसंचारी भवतीत्यर्थः ॥ ११ ॥

इति श्रीमद्रामानुजकृतौ प्रश्नोपनिषत्प्रकाशिकायां चतुर्थः प्रश्नः ॥ ४ ॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ ॥

स्पष्टोऽर्थः ।

५. स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकार-
मभिध्यायीत, कतमं वाव स तेन लोकं जयतीति ।

हवा इति प्रसिद्ध्यतिशये तदव्ययम् । स इत्येतदधिकारिसामान्यपरम् । अयमर्थः—हे भगवन्पूजार्ह योऽधिकारी मनुष्याणां मध्ये मरणान्तमोंकारमभिध्यायति स कतमं लोकं तेनोंकारेण प्राप्नोतीत्यर्थः । वावशब्दोऽवधारणे प्रसिद्धौ वा ।

तस्मै स होवाच ॥ १ ॥

स्पष्टोऽर्थः ॥ १ ॥

एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः ॥
तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ॥ २ ॥

हे सत्यकामैतदेव परं चापरं च ब्रह्मोभयवाचकमित्यर्थः । वाच्यवाचकभावनिबन्धनं सामानाधिकरण्यं तथैव व्यासार्यैरीक्षतिकर्माधिकरणे व्याख्यातत्वात् । किं तदित्यत्राऽऽह—यदोंकारस्तस्मादुपासक एतेनैवोंकाररूपेण मार्गेणैकतरं परमपरं वा ब्रह्मान्वेत्युपास्त इत्यर्थः ॥ २ ॥

स यद्येकमात्रमभिध्यायीत स तेनैव
संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते ।

स उपासको यद्येकमात्रं ह्रस्वप्रणवमपरब्रह्मवाचकमभिध्यायीत । अपरब्रह्मवाचकेन ह्रस्वेन प्रणवेन योऽक्षरं ब्रह्मोपास्ते स तेनैवैकमात्रोंकारकरणकापरब्रह्मध्यानेनैव संवेदितो लब्धसत्ताको जगत्यां भुव्यभिसंपद्यते । अभ्यभ्यर्हितश्रेष्ठः संपद्यते ।

तमृचो मनुष्यलोकमुपनयन्ते ।

तमृङ्मन्त्रा मनुष्यलोकं प्रापयन्ति ।

स तत्र तपसा ब्रह्मचर्येण श्रद्धया
संपन्नो महिमानमनुभवति ॥ ३ ॥

स मनुष्यलोकं नीतस्तपसाऽनशनादिना ब्रह्मचर्येण मैथुनवर्जनेन

श्रद्धयाऽऽस्तिक्यबुद्ध्या यदि संपन्नो भवति तदा महिमानं श्रेयःसाधकं ब्रह्मोपासनमनुतिष्ठतीत्यर्थः। न चैको ह्रस्वाभावात्कथमोंकारस्य ह्रस्वत्वमिति शङ्कनीयं लोके ह्रस्वस्योंकारस्य दर्शनात्।

अथ यदि द्विमात्रेण मनसि संपद्यते।

द्विमात्रेणापरब्रह्मवाचकेन प्रणवेन यस्य मनस्यपरब्रह्मध्यानं संपद्यते।

सोऽन्तरिक्षं यजुर्भिरुन्नीयते देवलोकम्।

अन्तरिक्षाश्रितसोमलोकं द्विमात्रोपासकः पुमान्यजुर्मन्त्रैरुन्नीयते। अत्रान्तरिक्षसोमलोकशब्द ऊर्ध्वमात्रोपलक्षक आमुष्मिकत्वपरः। अत ईक्षतिकर्माधिकरणभाष्ये यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपासीनानामैहिकमनुष्यलोकप्राप्तिफलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधायेत्युक्तम्।

स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥

अमुष्मिन्नैश्वर्यमनुभूय तत्पुण्यावसाने पुनरावर्तते ॥ ४ ॥

यः पुनरेतं त्रिमात्रेणोमित्येतेने-
वाक्षरेण परमपुरुषमभिध्यायीत।

यस्तु एकमात्रद्विमात्रत्वदशायामर्वाचीनफलसाधनेनैतेनैवाक्षरेण परमात्मानमभिध्यायति। आभिमुख्येन ध्यायति निरन्तरं ध्यायतीत्यर्थः।

स तेजसि सूर्ये संपन्नः। यथा पादोदर-
स्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना
विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्।

स उपासकस्तेजोमण्डले सूर्ये संगतः सन्नुदरमेव पादो यस्य स पादोदरः सर्प इति यावत्। यथा सर्पो जीर्णया त्वचा विनिर्मुक्तो भवत्येवं पाप्मना विनिर्मुक्तः सन्भगवल्लोकं वैकुण्ठं सामभिर्गीतिप्रधानैर्मन्त्रैरुन्नीयते। अत्र व्यासार्यैः—स पाप्मना विनिर्मुक्त इति तच्छब्दानन्तरश्रवणात्ससामभिरित्येकपदमाश्रित्य सामगानसहितैरिति वा सान्त्ववचनसहितैः पुरुषैरिति वाऽर्थ इति वर्णितम्।

एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ।

ईक्षतिकर्माधिकरणे यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते चतुर्मुखस्यापि तच्छ्रूयते । यो ब्रह्माणं विदधाति पूर्वमिति भाष्योक्तेः । जीवघनशब्देन संसारमण्डलमुच्यते । मूर्तौ घनः [पा०३।३।७७] इति काठिन्यशब्दितमूर्तौ घनशब्दस्य निपातितत्वात् । देहद्वारत्वादात्मनि काठिन्यत्वस्य । घनशब्दो देहिपर एव तस्मात्परः परिशुद्धात्मा तस्मादपि परभूतं पुरिशयं पूः प्राणिनः सर्वगुहाशयस्येति सर्वेषु प्राणिष्वन्तरात्मतया शयानम्—

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

इति निरुपाधिकपुरुषशब्दवाच्यं भगवन्तं वासुदेवमीक्षत इत्यर्थः । अत एव स सामभिरुन्नीयते ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशङ्का त्युदस्ता चतुर्मुखगतानां परवासुदेवेक्षणासंभवादिति द्रष्टव्यम् ।

तदेतौ श्लोकौ भवतः ॥ ५ ॥

तदोंकारध्यानमधिकृत्य वक्ष्यमाणौ श्लोकौ प्रवृत्तावित्यर्थः ॥ ५ ॥

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता
अन्योन्यसक्ता अनविप्रयुक्ताः ।

अविप्रयुक्ता न भवन्तीत्यनविप्रयुक्ताः । विप्रयुक्ता अत्यन्तद्रुतोच्चारणेनान्योन्यसक्ततयाऽतिविप्रकृष्टकालतयाऽत्यन्तविप्रयुक्ततया वा प्रयुक्तास्तिस्रो मात्रा मृत्युमत्यो मृत्युप्रदा अनर्थावहा इति यावत् । मृत्युमत्य(?) इति पाठेऽपि स एवार्थः ।

क्रियासु बाह्यान्तरमध्यमासु सम्य-
क्प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥

यज्ञादिका बाह्याः क्रिया आन्तरा मानसक्रिया मध्यमा वाचिकजपरूपा । आसु क्रियासु तिसृषु मात्रासु सम्यगत्यन्तसंयोगवियोगमन्तरेण प्रयुक्तासु सतीषु सुज्ञस्तस्य योगाभिज्ञः पुमान्न कम्पते फलान्न च्यवत इत्यर्थः ॥ ६ ॥

आनन्दाश्रमस्थपुस्तके—१ त्वाभ्यन्त° ।

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते। तमोंकारेणैवाऽऽयतनेनान्वेति विद्वान्य त्तच्छान्तमजरममृतमभयं परं चेति ॥ ७ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि पञ्चमः प्रश्नः ॥ ५ ॥

---

कवयः क्रान्तदर्शिनः तं 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्युक्तरीत्या सूरयो यं लोकं पश्यन्ति तमोंकारेणैव मार्गेणान्वेति गत्वा च शान्तिमूर्मिषट्करहितं जरामरणशून्यमकुतोभयं सर्वकारणत्वेन सर्वोत्कृष्टं ब्रह्म च प्राप्नोतीत्यर्थः। अस्य संदर्भस्य परमात्मपरत्वं 'ईक्षतिकर्मव्यपदेशात्सः' [ ब्र० सू० १।३।१३ ] इति सूत्रकारैः प्रत्यपादि। तदर्थस्तु तद्भाष्य इत्थमुक्तः–आथर्वणिकाः सत्यकामप्रश्नेऽधीयते यः पुनरेतं त्रिमात्रेणोमित्येवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते। एवं हैवं स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्। 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत' इति। अत्र ध्यायतीक्षतिशब्दावेकविषयौ। ध्यानफलत्वादीक्षणस्य। यथा क्रतुरस्मिँल्लोके पुरुष इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्परमपुरुषमित्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च तत्र संशय्यते किमिह परमपुरुषमिति निर्दिष्टो जीवसमष्टिरूपोऽण्डाधिपतिश्चतुर्मुख उत सर्वेश्वरः पुरुषोत्तम इति किं युक्तम्। समष्टिक्षेत्रज्ञ इति कुतः। स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत' 'कतमं वाव स तेन लोकं जयतीति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिमभिधाय त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते। तद्गतेन वीक्ष्यमाणस्तल्लोकाधिपश्चतुर्मुख एव। एतस्माज्जीवघनात्परात्परमिति च देहेन्द्रियादिभ्यः पराद्देहेन्द्रियादिभिः सह घनीभूतजीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते। अतोऽत्र निर्दिश्यमानः परः पुरुषः समष्टिपुरुषश्चतुर्मुख एव। एवं चतुर्मुखत्वे निश्चितेऽजरत्वादयो यथा-

---

आनन्दाश्रमस्थपुस्तके—१ यत्तत्क°। २ वेदयन्ते।

कथं विज्ञेया इति प्राप्ते प्रचक्ष्महे। ईक्षतिकर्मव्यपदेशात्स इति। ईक्षतिकर्म परमात्मा कुतो व्यपदेशात्। व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन तथा हीक्षतिकर्मविषयतयोदाहृते श्लोके तमोंकारेणैवाऽऽयतनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति। परं शान्तमजरमभयममृतमिति परमात्मन एवैतद्रूपम्। एतदभयमेतदमृतमेतद्ब्रह्मेत्येवमादिश्रुतिभ्यः। एतस्माज्जीवघनात्परात्परमिति च परमात्मन एव व्यपदेशो न चतुर्मुखस्य तस्यापि जीवघनशब्दगृहीतत्वात्। यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते। चतुर्मुखस्यापि तच्छ्रूयते। यो ब्रह्माणं विदधाति पूर्वमित्यादौ यत्पुनरुक्तमन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयत इति। तत्रस्थश्चतुर्मुख इति तदयुक्तम्। यत्तच्छान्तमजरमभयमित्यादिना ईक्षतिकर्मणः परमात्मत्वे निश्चिते सतीक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुर्हति। किंच यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह्येव स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकमिति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्। अत एव चोदाहरणश्लोक इममेव ब्रह्मलोकमधिकृत्य श्रूयते—यत्तत्कवयो वेदयन्त इति। कवयः सूरयः सूरिभिर्दृश्यं च वैष्णवं पदमेव तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इत्येवमादिभ्यः। न चान्तरिक्षात्परश्चतुर्मुखलोको मध्ये स्वर्गलोकादीनां सद्भावात्। अत एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेतीति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परमपुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम्। अत ईक्षतिकर्म परमात्मेति ॥ ७ ॥

इति श्रीमद्रामानुजमुनिकृतौ प्रश्नोपनिषत्प्रकाशिकायां
पञ्चमः प्रश्नः ॥ ५ ॥

---

 अथ हैनं सुकेशा भारद्वाजः पप्रच्छ ॥

स्पष्टोऽर्थः।

१ भगवन्हिरण्यनाभः कौशल्यो राज-
पुत्रो मामुपेत्यैतं प्रश्नमपृच्छत् ॥

हे भगवन्हिरण्यनाभनामा कोशलदेशाधिपती राजपुत्रो मत्समीपमागत्येमं वक्ष्यमाणं प्रश्नं कृतवान् ।

किमिति—

षोडशकलं भारद्वाज पुरुषं वेत्थ इति ।

हे भारद्वाजेति मां संबोध्य प्राणाद्या नामान्ताः षोडश कला यस्य स षोडशकलस्तं पुरुषं जानासि किमित्यर्थः ।

तमहं कुमारमब्रुवं नाहमिमं वेद यद्य-
हमिममवेदिषं कथं ते नावक्ष्यमिति ।

तं राजकुमारमेवमुक्तवान । त्वदुक्तं पुरुषमहं न जानामि यद्यहं जानीयां केन हेतुना राजकुमाराय योग्याय शिष्याय न कथयिष्यामीति ।

समूलो ह वा एष परिशुष्यति योऽनृ-
तमभिवदति तस्मान्नार्हाम्यनृतं वक्तुम् ॥

योऽनृतं ब्रूते स मूलेन सह सर्वतः शुष्यति श्रेयोहेतुभूतं पुण्यं सवासनं नश्यतीत्यर्थः । अतो मदुक्ते त्वयाऽनृतशङ्का न कार्येति भावः ।

स तूष्णीं रथमारुह्य प्रवव्राज ।

प्रकर्षेण गतः, अनेन स्वल्पलज्जा सूचिता । रथेन प्रवव्राजेत्यनेन तस्य प्रभुत्वं सूचितं भवति ।

तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

तमेव षोडशकलं पुरुषं पृच्छामि । क्वासाविति क्व प्रदेशे तिष्ठतीत्यर्थः अत्राऽऽधारभूतदेशप्रश्नद्वारा जीवो वा परमात्मा वेति निर्णयार्थोऽयं प्रश्न इति द्रष्टव्यम् ।

तस्मै स होवाच ।

स्पष्टोऽर्थः ।

---

इहैवान्तःशरीरे सोम्य स पुरुषो यस्मि-
न्नेताः षोडश कलाः प्रभवन्तीति ॥ २ ॥

यस्मिन्पुरुष एता वक्ष्यमाणा इहैवान्तःशरीरे वर्तत इति शेषः। अनेन शरीरपरिच्छिन्नप्रदेशमात्राधारत्वोक्त्या जीव इत्युत्तरमुक्तं भवति। ननु जीवस्यैव कथं षोडशकलत्वं षोडशकलाधारत्वतत्स्रष्टृत्वयोः परमात्मन्येव पुष्कलत्वादित्याशङ्क्याऽऽह—यस्मिन्नेताः षोडश कलाः प्रभवन्ति। यस्मिन्पुरुष एता वक्ष्यमाणाः प्राणाद्या नामान्ताः षोडशकलाः स्वसंसर्गप्रयुक्तसुखदुःखादिभोगाख्यमुपकारं कर्तुं प्रभवन्ति समर्था भवन्तीत्यर्थः। ततश्च षोडशकलाभोक्तृत्वमेव षोडशकलत्वं तच्च जीवस्यैवेति भावः ॥ २ ॥

ननु षोडशकलासंसर्गहेतुत्वे जीवपरमात्मनोरविशिष्टे तद्भोक्तृत्वं जीवस्यैव न परमात्मन इत्यत्र किं नियामकमित्यत्राऽऽह—

स ईक्षांचक्रे । कस्मिन्नहमुत्क्रान्त
उत्क्रान्तो भविष्यामीति कस्मिन्वा
प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥

सोऽध्यक्षे तदुपगमादिभ्यः [ ब्र०सू० ४।२।४ ] इति भाष्ये प्रतिष्ठा च जीवेन सह श्रूयते। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीत्युक्तत्वात्। इदं वाक्यं जीवाभिसंबन्धिप्रकारप्रदर्शनपरम्। मदुत्क्रान्तिप्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठः को वेति पर्यालोचितवानित्यर्थः। ततश्च स्वोपकाराभिसंधिपूर्वकं जीवस्य प्राणादिस्रष्टृत्वात्तद्भोक्तृत्वं संभवति। परमात्मनस्तु—

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ [भ० गी० ९।९]

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा [ भ० गी० ४ । १४ ] इत्युक्तरीत्या स्वोपकाराभिसंधिपूर्वकस्रष्टृत्वाभावान्न तस्य षोडशकलाभोक्तृत्वमिति भावः ॥ ३ ॥

स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्यो-

१ आनन्दाश्रमस्थपुस्तके—°वर्ततीति ।

तिरापः पृथ्वीन्द्रियं मनः । अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ॥ ४ ॥

स जीव एवं पर्यालोच्य प्रथमतः स्वोत्क्रान्तिप्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठं मुख्यप्राणं सृष्टवांस्तस्मादूर्ध्वमास्तिक्यबुद्धिं पञ्च महाभूतानि वागादीन्द्रियं मनो व्रीह्यादिरूपमन्नं तदायत्तं शरीरेन्द्रियसामर्थ्यं शरीरशोषणादिलक्षणं तप ऋग्यजुःसामादीन्मन्त्राञ्ज्योतिष्टोमादीनि कर्माणि कर्मफलभूतान्स्वर्गादींल्लोकांस्तेषु लोकेषु स्वर्गादीनि नामानि सृष्टवानित्यर्थः । यद्यपि षोडशकलास्रष्टृत्वं परमात्मन एव तथाऽपि तद्धेतुभूतादृष्टारम्भककर्मकर्तृत्वेनायं स्रष्टृत्ववाद इति द्रष्टव्यम् । ततश्च स्वभोगोपकारिकाः षोडशापि कलास्तद्धेतुभूतादृष्टारम्भककर्माणि कृत्वा सृष्टवान् । अतस्तद्भोक्तृतया षोडशकलत्वं जीवस्येति यावत् ॥ ४ ॥

अथ परमात्मन ईदृक्त्वाज्ञावादकलत्वं तद्द्वारा मुमुक्षुवेद्यत्वं चोपपादयति—

स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते ।

यथा प्रस्रवन्त्यो गङ्गाद्या नद्यः समुद्रायणा अत्रायनशब्देनाऽऽधारत्वमुखेनाऽऽत्मत्वमुच्यते । समुद्रात्मिकाः समुद्रात्पृथक्स्थितिप्रतिपत्तिका भूत्वा समुद्रं प्राप्यास्तं गच्छन्त्यदर्शनं यान्ति न तु समुद्रे वृध्द्यादिलक्षणं विकारमुत्पादयितुं प्रभवन्ति तासां च गङ्गायमुनादिनामानि यानि शुक्लकृष्णादीनि च रूपाणि प्राक्तनानि तानि भिद्यन्ते तत्प्रवेशानन्तरं च न भवन्तीत्यर्थः । तदेव दर्शयति—समुद्र इत्येवं प्रोच्यत इति । तत्र प्रविष्टं नदीजातं सर्वं समुद्र इत्येव प्रोच्यते न तु गङ्गायमुनेति स यथा स दृष्टान्तो यथेत्यर्थः ।

एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गछन्ति भिद्येते चाऽऽसां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति ।

अस्य परिद्रष्टुरनुभवितुर्भोक्तुर्जीवस्य भोगोपकरणभूता इमाः षोडशापि कला निरुपाधिकपुरुषशब्दवाच्यं पुरुषं वासुदेवं प्राप्यास्तं

गच्छन्ति यथा शिलातलं प्राप्य क्षुरधाराः कुण्ठी भवन्ति तथा भोगा- धायका न भवन्तीत्यर्थः। तत्र हेतुमाह—पुरुषायणा इति। पु रुष- संकल्पाधीनस्वरूपस्थितिप्रवृत्तिका इत्यर्थः। तासां कलानां जीव- विषये भोगभोग्यस्थानभोगोपकरणत्वादिनामरूपभेदवत्परमात्म विषये भोगस्थानत्वादिनामरूपे न स्तः। तदेव दर्शयति—पुरुष इत्येवं प्रोच्यत इति। पुरुषाः पृथक्स्थितिप्रतिपत्तिकतया पुरुष इत्येवं प्रोच्यते न तु तद्भिन्नत्वे तद्भोग्यभोगस्थानत्वादिना तत्कलादित्वेन प्रोच्यते तस्मात्परमात्मनः कलाभोक्तृत्वाभावादकल इत्येवोच्यते। अत एवामृतश्च मरणस्य भोक्तृत्वरूपकलासंबन्धाधीनत्वादिति भावः।

तदेष श्लोकः ॥ ५ ॥

तत्परमात्मस्वरूपमधिकृत्य वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः ॥ ५ ॥

अरा इव रथनाभौ कला यत्र प्रतिष्ठिताः।

यदात्मिका यदुपादानिका इत्यर्थः। शिष्टं स्पष्टम्।

तं वेद्यं पुरुषं वेद[1] यथा ।

यथा तमेव पुरुषं मुमुक्षुवेद्यमवगच्छतो ब्रह्मज्ञानफलमाह—

मा वो मृत्युः परिव्यथाः ॥ ६ ॥

ब्रह्मज्ञानां युष्माकं परितो व्यथा मृत्युर्मा कार्षीदित्यर्थः ॥ ६ ॥

तान्होवाचैतावदेवाहं परं[2] ब्रह्म वेद। नातः परमस्तीति ॥ ७ ॥

तान्सुकेशादीन्षडपि शिष्यान्प्रत्येतदुवाच। अहमेतावदेव परं ब्रह्म जानामि परब्रह्मविषये ममैतावदेव ज्ञानमितोऽधिकं नास्तीत्यर्थः ॥ ७ ॥

ते तमर्चयन्तस्त्वं हि नः पिता योऽ-

स्माकमविद्यायाः परं पारं तारयसीति।

ते षडपि शिष्यास्तं पिप्पलादं त्वमस्माकं संसाराकूपारतीरं प्रापक- तया पिताऽसि तस्मात्वत्तो जन्मैव श्रेष्ठं जन्म स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्मेतिश्रवणादित्यर्चयन्तः पूजयन्तो बभूवुः।

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि षष्ठः प्रश्नः ॥ ६ ॥

---

आनन्दाश्रमस्थपुस्तके—१ वेद। २ परमेतद्ब्र॰।

उत्तरंशान्तिस्थान इदं वाच्यम् । अभ्यास उपनिषत्समाप्त्यर्थः । नचैतावदेवाहं परं ब्रह्म वेद नातः परमस्तीति षोडशकलजीवातिरिक्तपरब्रह्मनिषेधः किं न स्यादिति वाच्यम् । 'अधिकं तु भेदनिर्देशात्' [ ब्र० सू० २।१।२२] इत्यादिभिर्विरोधप्रसङ्गात् । तत्र हि जीवाभेदाद्ब्रह्मणो जगत्कारणत्वे हिताकरणादिदोषमाशङ्क्य जीवभेदाद्दोषाभावः सिद्धान्तितः । तथाहि तदधिकरणभाष्यम्—जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिस्तत्त्वमसि 'अयमात्मा ब्रह्म' इत्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यत इत्युक्तम् । तत्रेदं चोद्यते, यदीतरस्य जीवस्य ब्रह्मभावोऽमीभिर्वाक्यैर्व्यपदिश्यते तदा ब्रह्मणः सार्वज्ञ्यसत्यसंकल्पादियुक्तस्याऽऽत्मनो हितरूपजगदकरणमहितरूपजगत्करणमित्यादयो दोषाः प्रसज्येरन् । आध्यात्मिकाधिदैविकाधिभौतिकानन्तदुःखाकरं चेदं जगत् । नचेदृशे ऽनर्थे स्वाधीनो बुद्धिमान्प्रवर्तते । जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः । भेदे सत्यनन्यत्वासिद्धेः। औपाधिकभेदविषया भेदश्रुतयः स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चेत्तत्रेदं वक्तव्यम्—स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा न वा । न जानाति चेत्सर्वज्ञत्वहानिः । जानाति चेत्स्वस्मादभिन्नस्य जीवस्य दुःखम् ? स्वदुःखमेव जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या । जीवब्रह्मणोरज्ञानकृतो भेदस्तद्विषया भेदश्रुतिरिति चेत्तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलं च तदवस्थम् । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न संभवति । अज्ञानेन प्रकाशस्तिरोहितश्चेत्तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम् । अत इदमसंगतम्—ब्रह्मणो जगत्कारणत्वमिति 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' [ब्र० सू० २।१।२१] इति सूत्रेण पूर्वपक्षं प्रापय्य सिद्धान्तोऽभिधीयते—'अधिकं तु भेदनिर्देशात्' [ब्र० सू० २।१।२२] इति । तुशब्दः पक्षं व्यावर्तयति । आध्यात्मिकादिदुःखभोगार्हप्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म कुतो भेदनिर्देशात् । प्रत्यगात्मनो हि भेदेन निर्दिश्यते परं ब्रह्म 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टं ततस्तेनामृतत्व-

मेति' [श्वे० १।६] 'स कारणं करणाधिपाधिपः' [श्वे० ६।९] 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' [श्वे० ४।६] 'ज्ञाज्ञौ द्वावजावीशानीशौ'[श्वे०१।९] 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः।' [बृ० ४।३।२१] 'प्राज्ञेनाऽऽत्मनाऽन्वारूढः' [बृ० ४।३।३५] 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' [श्वे० ४।९] 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' [श्वे० ६।१६] 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' [श्वे० ६।१३] 'योऽव्यक्तमन्तरे संचरन्यस्याव्यक्तं शरीरम्'। 'यमव्यक्तं न वेद योऽक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिभिः 'अश्मादिवच्च तदनुपपत्तिः' [ब्र० सू० २।१।२३] इति अश्मकाष्ठलोष्टतृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्यनिर्विकारनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपनानाविधानन्तमहाविभूतिब्रह्मस्वरूपैक्यं यथा नोपपद्यते, तथा चेतनस्याप्यनन्तदुःखार्हस्य खद्योतकल्पस्य 'अपहतपाप्मा' इत्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगुणगणाकरब्रह्मभावानुपपत्तिः। सामानाधिकरण्यनिर्देशो यस्याऽऽत्मा शरीरमित्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वाद्ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेर्जीवप्रकारकब्रह्मप्रतिपादनपरश्चेत्तद्विरोधी, प्रत्युतैतस्यार्थस्योपपादकश्चेति 'अवस्थितेरिति काशकृत्स्नः' इत्यादिभिरसकृदुपपादितम्। अतः सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीरमिति सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणं तदेव ब्रह्म स्थूलचिदचिद्वस्तुशरीरं जगदाख्यं कार्यमिति जगद्ब्रह्मणोः सामानाधिकरण्योपपत्तिः। जगतो ब्रह्मकार्यत्वं, ब्रह्मणोऽनन्यत्वमचिद्वस्तुनो जीवस्य ब्रह्मणश्च परिणामित्वदुःखित्वकल्याणगुणाकरत्वस्वभावासंकरः सर्वश्रुत्यविरोधश्च भवति 'सदेव सोम्येदमग्र आसीत' एकमेवेत्यविभागावस्थायामप्यचिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम्। 'वैषम्यनैर्घृण्ये न सापेक्षत्वात। न कर्माविभागादिति चेन्नानादित्वात' [ब्र० सू० २।१।३५] 'उपपद्यते चाप्युपलभ्यते च' [ब्र० सू०२।१।३६]इति सूत्रद्वयोदितत्वात्तदानीमपि सूक्ष्मरूपेणावस्थानस्य। अविभागस्तु नामरूपविभागाभावादुपपद्यते। अतो ब्रह्मकारणत्वं संभवत्येवेति। एवम् 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात' [ब्र० सू० ३।४।८]

'भेदव्यपदेशाच्चान्यः' [ ब्र० सू० १।१।२१ ] 'सुषुप्त्युत्क्रान्त्योर्भेदेन' [ब्र० सू० १।३।४२ ] 'उभयेऽपि हि भेदेनैनमधीयते' [ब्र०सू०१।२।२०]इत्यादिन्यायाः प्रकुप्येयुरित्यलं प्रपञ्चेन ॥ ८ ॥

इति श्रीमद्रामानुजमुनिकृतौ प्रश्नोपनिषत्प्रकाशिकायां
षष्ठः प्रश्नः ॥ ६ ॥

समाप्तेयं प्रश्नोपनिषत् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# मुण्डकोपनिषत्

---

रङ्गरामानुजविरचितप्रकाशिकासमेता ।

---

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान्गुरूनपि ।
मुण्डकान्विदुषां प्रीत्यै व्याकरोमि यथामति ॥ २ ॥

विद्याप्ररोचनार्थाऽऽख्यायिका—

ब्रह्मा देवानां प्रथमः संबभूव ॥

चतुर्मुख इन्द्रादीनां देवानामग्र उत्पन्न इत्यर्थः । स कीदृश इत्यत्राऽऽह—

विश्वस्य कर्ता भुवनस्य गोप्ता ॥

विश्वस्य भुवनस्य सर्वस्य भुवनस्योत्पादयिता रक्षकश्चेत्यर्थः ।

स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

तादृशो ब्रह्मा सर्वविद्याश्रयभूतां ब्रह्मविद्यामथर्वनाम्ने ज्येष्ठपुत्रायोक्तवानित्यर्थः । ब्रह्मविद्यायाः सर्वविद्याश्रयत्वं च ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावेन ब्रह्मज्ञाने कृत्स्नज्ञानस्यान्तर्भूतत्वादिति व्यासार्यैरुपपादितम् ॥ १ ॥

अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा
तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।

अथर्वणे ब्रह्मा प्रोवाच तामथर्वनामकऋषिः स्वशिष्यायाङ्गिर्नाम्न ऋषये प्रोवाच ।

स भारद्वाजाय सत्यवाहाय प्राह ।

सोऽङ्गिर्नाम ऋषिर्भरद्वाजगोत्राय सत्यवाहनाम्ने प्रोक्तवान् ।

---

आनन्दाश्रमस्थपुस्तके.- १ प्रतिष्ठा । २ वहाय ।

भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

परस्मादवरेण प्राप्तेति परावरा पराऽवरसर्वविद्याप्राप्तेर्वा परावरा तामङ्गिरसे प्राहेत्यनुषङ्गः ॥ २ ॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ।

महागृहस्थः शुनकसुतः समित्पाणित्वादिशास्त्रीयनियमानतिक्रमेणोपगतः सन्पृष्टवान् ।

कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

हे भगवः । उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इतिलक्षण । भगवन्नित्यस्य विभाषा भवद्भगवदिति नकारस्य रुत्वेऽवस्यौत्वाभावश्छान्दसः । यथा मृत्पिण्डे विज्ञाते सर्वं मृन्मयं विज्ञातं भवति एवं कस्मिंश्चिद्वस्तुविशेषे ज्ञाते सर्वं कार्यजातं विज्ञातं भवतीति सामान्यतो भवादृशां वचनमर्थापि तादृग्वस्तु किमिति प्रश्नार्थः । सर्वनिमित्तोपादानभूतं वस्तु किमितीति यावत् । ननु सर्वमिदमिति शब्देन स्थूलचिदचिच्छरीरविशिष्टं ब्रह्मोच्यत उत विशेषणमात्रम् । नाऽऽद्यः प्रश्नदशायां शौनकस्याब्रह्मवित्त्वेनाब्रह्मविद इदंबुद्धिशब्दयोर्ब्रह्मपर्यन्तत्वाभावात् । तेनेदं पूर्णं पुरुषेण सर्वमित्युत्तरवाक्य इदं सर्वमित्यस्य विशेषणमात्रे पर्यवसायित्वेन ब्रह्मपर्यन्तत्वाशङ्केनेन प्रश्नवाक्यगतस्यापीदं सर्वमिति शब्दस्य ब्रह्मपर्यन्तत्वाभावात् । न द्वितीयो विशेषणभूतस्थूलचिदचितोरक्षरब्रह्मभिन्नयोर्वक्ष्यमाणाक्षरब्रह्मोपादानकत्वाभावादिति चेदुच्यते । इदं सर्वमित्यनेन विशेषणमेव निर्दिश्यते न विशेष्यम् । अथापि विशेषणस्यापि ब्रह्मोपादेयत्वमस्ति । नह्यभिन्नयोरेवोपादानोपादेयभाव इति नियमः । भाविस्थूलावस्थावतः पूर्वभाविसूक्ष्मावस्थायोगि ह्युपादानम् । अवस्थावत्त्वं च चिदचिदीश्वराणां त्रयाणामप्यस्त्येव । इयांस्तु विशेषः—अद्वारकावस्थायोगित्वमचेतनस्य, जीवस्य तु धर्मभूतज्ञानद्वाराऽचेतनशरीरद्वारा च कर्मकृतसंकोचविकासरूपावस्थाश्रयत्वम् । परमात्मनस्तु चेतनाचेतनद्वारकमवस्थाश्रयत्वमद्वारकनियन्तृत्वावस्थाश्रयत्वं च । ततश्च महत्त्वाहंकारत्वादिलक्षणभाव्यवस्थायोगित्वस्याचेतनपरमात्मसाधारण्येन परमात्मन इव चेतनप्रपञ्चस्यापि भाव्यवस्थाश्रयत्वेनाक्षरं प्रत्युपादेयत्वमस्त्येव । तत-

श्चेदं सर्वमिति विशेषणमात्रनिर्देशेऽपि तस्य वक्ष्यमाणमक्षरमुपादानं भवत्येवेति—कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति विशेषणमात्र उपादानप्रश्न उपपद्यते। अत एव महासिद्धान्ते कृत्स्नस्य जगतो ब्रह्मकार्यतया, तदन्तर्यामिकतया, च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं निषिध्यत इति भाष्यव्याख्यानावसरे व्यासार्यैर्निर्दिष्टयोरेवोपादानोपादेयभावः। न तु विशेषणीभूतस्य चेतनाचेतनप्रपञ्चस्य ब्रह्मोपादानकत्वम्। शरीरात्मभावस्तु निष्कृष्टविशेषणस्य च निष्कृष्टविशेष्यस्य च चिदचिद्विशिष्टब्रह्मणश्चिदचिद्विशिष्टब्रह्मानियाम्यात्केवलस्य प्रपञ्चस्य, केवलब्रह्मान्तर्यामिकत्वादिति, पक्षमाश्रित्य, तदन्तर्यामिकतयेत्यत्र निष्कर्षजगत इति शब्दान्तरमध्याहर्तव्यमित्युक्त्वा 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः'। [छा० ६।८।४] इति वाक्ये उपादानोपादेयभावप्रतिपादके सन्मूलाः सत्प्रतिष्ठा इत्यत्र प्रजाशब्दस्य ब्रह्मपर्यन्तत्वं, सच्छब्दस्यापि सूक्ष्मचिदचिद्विशिष्टब्रह्मपरत्वं, सदायतना इति शरीरात्मभावप्रतिपादकांशे तु प्रजाशब्दस्य विशेषणमात्रपरत्वं सच्छब्दस्य विशेष्यमात्रपरत्वं ब्रह्मणो ब्रह्मान्तर्यामित्वासंभवात्केवलप्रपञ्चस्य विशेष्यमात्रान्तर्यामिकत्वेऽपि विशिष्टान्तर्यामिकत्वाभावादित्युक्त्वाऽस्मिन्पक्षे सकृत्प्रयुक्तस्य प्रजाशब्दस्य वैरूप्यं सच्छब्दानां च वैरूप्यं जगत इति शब्दान्तराध्याहारादिलक्षणभाष्यक्लेशं च पर्यालोच्य प्रजाशब्दस्य विशेषणमात्रपरत्वमेव सच्छब्दस्य विशेष्यमात्रपरत्वमेव। न च विशेषणीभूतचिदचिद्वर्गस्य सदुपादानकत्वं नास्तीति शङ्क्यम्। तस्यापि भाव्यवस्थावत्त्वेन विशिष्टस्येव विशेषणस्यापि ब्रह्मोपादानकत्वसंभवादिति स्वाभिमतं पक्षान्तरमुपन्यस्तं यद्वा जगत इति निष्कर्षकः शब्द इत्यादिना। आत्मेति तूपगच्छन्तीतिभाष्यादौ सर्वस्य चिदचिद्वस्तुनस्तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मेति शरीरत्वोपादेयत्वयोः सामानाधिकरण्यं बहुकृत्व उद्घुषितम्। नचैतदन्यथा कर्तुं प्रभवामः। 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' [ब्र० सू० ४।३।२१] इति वाक्ये प्राज्ञशब्दिते भिन्ने परमात्मनि जीवस्य परिष्वङ्गरूपलयश्रवणाच्च। न च परिष्वङ्गो न लयः किंत्वन्य एव संसर्गविशेष इति वाच्यम्। 'स्वाप्ययात्'[ब्र० सू० १।१।१०]इतिसूत्रभाष्यतद्व्याख्यानग्रन्थपर्यालोचनायां तयोः समानार्थकत्वस्योपलभ्यमानत्वात्। न च जाग्रदाद्यवस्थागतरागद्वेषादिकालुष्ययुक्तजीवविशिष्टस्य परमात्मनस्तद्रहितजीवविशिष्टपर-

मात्मरूपेणावस्थानमेव 'सता सोम्य तदा संपन्नो भवति' इति वाक्यस्यार्थोऽभ्युपेतः स एव प्राज्ञेनाऽऽत्मनेति वाक्यस्याप्यर्थोऽस्त्विति वाच्यम्। तथा सत्यस्य वाक्यस्य जीवपरभेदासाधकत्वेन 'सुषुप्त्युत्क्रान्त्योर्भेदेन' [ब्र०सू०१।३।४२]इतिसूत्रासंगतिप्रसङ्गात। न च भाव्यवस्थावत्सर्वमुपादेयं पूर्वावस्थावत्सर्वमुपादानं चेच्चाविमहत्त्वाहंकारत्वाद्यवस्थावत्परमात्मानं प्रत्यव्यक्तत्वलक्षणपूर्वावस्थाश्रयस्याचेतनस्याप्युपादानत्वप्रसङ्गः। अतो भाव्यवस्थावतस्तदभिन्नं पूर्वावस्थायोगी नोपादानमिति वक्तव्यम्। ततश्चेदंशब्दवाच्यस्य विशेषणस्य न ब्रह्मोपादानकत्वमिति वाच्यम्। भाव्यवस्थावतः पूर्वावस्थायोगि यत्कारणं तदुपादानमित्युक्तावतिप्रसङ्गाभावात्। भाव्यवस्थावद्ब्रह्म प्रत्यचेतनस्य हेतुत्वग्राहकप्रमाणाभावेनोपादानत्वाभावेऽपि ब्रह्मणः सर्वकार्यकर्तृत्वश्रवणेन भाव्यवस्थावदचेतनांशं प्रत्युपादानत्वे नानुपपत्तिः। न च व्यक्तत्वमहत्त्वाद्यवस्थाया अव्यक्तमहदादिनिष्ठत्वेऽपि ब्रह्मनिष्ठत्वाभावेन पूर्वावस्थायोगित्वाभावात्कथमुपादानत्वमिति चेदत्र व्यासार्याः—प्रकृत्यधिकरणे ब्रह्मणश्चिदचिच्छरीरकतया प्रकृतेर्ब्रह्मस्वरूपान्तर्गतत्वेन प्रकृत्यवस्थानं ब्रह्मावस्थात्वात्। न हि विशेष्यमात्रं विशिष्टस्य स्वरूपं विशिष्टस्य वस्तुनो विशिष्टमेव हि स्वरूपं न हि घटस्य मृन्मात्रं स्वरूपमपि तु घटत्वविशिष्टम्। ननु यदि विशेषणमपि स्वरूपान्तर्भूतं तर्हि दण्डादयः संयोगादयश्च स्वरूपं स्युः। तथा यावद्द्रव्यभाविनामपृथक्सिद्धविशेषणानामेव स्वरूपान्तर्भावात्। किंच घटादिवस्तुन उदकाहरणादितत्तदसाधारणकार्ययोग्यत्वमेव स्वरूपं न मृन्मात्रं पिण्डेष्टकादीनामपि घटस्वरूपत्वप्रसङ्गात्। घटस्योदकाहरणं प्रति योग्यता नाम निश्छिद्रघटत्वमेव। यस्य वस्तुनो यत्कार्यं यदाकारान्वयव्यतिरेकानुविधायि स आकारस्तस्य वस्तुनस्तत्कार्यं प्रति योग्यता यथा च वह्नेरुष्णत्वं स्फोटजननेन यथा परशोर्नैशित्यं छेदनेन यथा च मृदो मृत्त्वं घटादिपरिणामश्लक्ष्णार्द्रभावश्च। एवं प्रकृतिपुरुषकालाश्च जगद्रूपेण बहुभवने परमात्मनो योग्यतास्थानीया अयुतसिद्धप्रकाराः। अत एव हि क्वचिच्छक्तिशब्देन जगदभिधीयते। कार्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिः। सा च योग्यता योग्यवस्तुनः स्वरूपान्तर्गता। अतो महदाद्यवस्थाश्चिदचिद्विशिष्टब्रह्मस्वरूपगता इति नावस्थाश्रयत्वासिद्धिः। यतो विशिष्टं ब्रह्मस्वरूपमत एव हि तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता

एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः [कौ० १।८] इति अरनाभिदृष्टान्त उपन्यस्यते । न हि नाभिमात्रं रथचक्रं किंतु नाभिवदरनेमी अपि स्वरूपान्तर्गते । तथा 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकाम्' [का०२।१७] इति मुञ्जेषीकादृष्टान्तश्च श्रुतः । नहीषीकामात्रं मुञ्जः किंतु बाह्यदलविशिष्टेषीका हि मुञ्जस्वरूपं विशेष्यांशस्य दृष्टान्त इषीका ।

यथा हि कदली नान्या त्वक्पत्रान्नाथ जायते ।
एवं विश्वस्य नान्यत्वं त्वं मायीश्वर दृश्यसे ॥

इति त्वक्पत्रकदलीदृष्टान्तश्च चिदचिद्विशिष्टं ब्रह्मस्वरूपमवगमयति । न हि बाह्यत्वक्पत्रेण विना काण्डमात्रं कदली । अपि तु त्वक्पत्रविशिष्टकाण्डस्वरूपा । एवं विश्वविशिष्टं त्वत्स्वरूपं तत्र विशेष्यभूतस्त्वं विशेषणांशश्च विलक्षणश्च दृश्यस इति ह्यर्थः । इयान्भेदः—नाभीषीकाकाण्डानामरनेमिबाह्यदलत्वक्पत्राणां चाचेतनतया मिथोनियन्तृनियाम्यभावाभावान्न शरीरशरीरिभावः । अत एव नेम्यादिशब्दाश्च न विशेष्यवाचकाः । इह तु नियन्तृनियाम्यभावादिना शरीरात्मभावसंभवाच्छरीरवाचिनः शब्दा ब्रह्मपर्यन्ता इति । अत एव महदाद्यवस्थानां विशिष्टब्रह्मस्वरूपावगतत्वादुपादानत्वं मुख्यम् । किंच मा भूत्प्रकृतिपुरुषयोः स्वरूपान्तर्भावस्तथाऽपि मुख्यत्वं युक्तं न हि शरीरद्वारकं ब्रह्मणो महदाद्युपादानत्वममुख्यं कारणतानिर्वाहकाग्न्यव्यवहितत्वाज्ज्वालाव्यवहितस्य काष्ठस्य पाकं प्रति कारणत्ववत् । ननु मृद्व्यवहितस्यापि कुलालस्य घटं प्रत्युपादानत्वं स्यादिति चेन्न स्वस्वतन्त्रनिष्ठमृत्पिण्डव्यवहितत्वात् । अतः स्वापृथक्सिद्धव्यवधानादुपादानत्वमविरुद्धम् । ननु तथाऽप्युपादानस्य कार्यावस्थाश्रयत्वं वाच्यम् । कथं व्यवहितमवस्थाविशेषं प्रत्याश्रयत्वम् । उच्यते—कुम्भोदरसंभृतमम्भः प्रति पुरुषस्येव परमात्मनो महदाद्यवस्थाश्रयत्वमुपपन्नम् । न च पुरुषस्याम्भोधारककुम्भधारकत्वमेव नाम्भोधारकत्वमिति वाच्यम् । तथा सत्यम्भोधारणजनितश्रमो न स्यात् । किंचाव्यवहितादपि व्यवहितस्याऽऽश्रयत्वं मुख्यं दृश्यते । यथाऽऽस्तरणांशुकादपि पर्यङ्कस्य यथा दर्भेभ्यो भूतलस्याव्यवहितमप्यंशुकं न पुरुषस्य धारकमसामर्थ्यात् । श्वभ्रमुखपिधायकविस्तीर्णमंशुकं न हि पदन्यासं धारयितुं प्रभवति कूपच्छादका हि दर्भास्तत्र निहितं पुरुषपदं न धारयन्ति । तस्मादंशुकानां दर्भाणां च

धारणासामर्थ्यात्पर्यङ्कभूतलयोरेव सामर्थ्यादास्तरणदर्भाणां पुरुषसंयोगमात्रव्यवधायकत्वमेव । अतः परमात्मनः सर्वावस्थाश्रयत्वं मुख्यमिति जगदुपादानत्वं मुख्यमेव । ननु जगदुपादानाव्यक्तशरीरकत्वेन जगदुपादानत्वमुच्यते चेत् । वैशेषिकादिपक्षाद्भवत्पक्षस्य को भेदः । नियाम्यविशेषो हि शरीरमभिमतं चिदचितोरीश्वरप्रेर्यत्वं तन्मतेऽप्यस्तीति चेत् । महत्तरोऽयं पर्यनुयोगः । वैशेषिकाश्चेदप्रामाणिकमेव ब्रूयुस्तदुक्तं चेदनादरणीयमिति न नः प्रतिज्ञा । अस्मदुक्तार्थस्तदङ्गीकृतश्चेत्का नः क्षतिः । किंच साम्यमपि दुरुपपादम् । आकाशकालदिगात्मवर्गस्येश्वरधार्यत्वानभ्युपगमादित्याहुः । ततश्च ब्रह्मणो जगदुपादानत्वे नानुपपत्तिः । ननु तथाऽपि ब्रह्मज्ञानाच्छरीरभूतप्रपञ्चज्ञानं नोपपद्यते तस्य तद्भिन्नत्वात् । न च सूक्ष्मचिदचिद्विशिष्टस्वरूपे ब्रह्मणि ज्ञायमाने सर्वस्यापि तदन्तर्गत्वात्, वने ज्ञाते तदन्तर्गतः पनसो ज्ञातो भवतीतिवत्प्रपञ्चो ज्ञातो भवतीतिनिर्देश उपपद्यतामिति वाच्यम् । भवन्मते ब्रह्मणोऽवस्थाश्रयत्वाभावेनोपादानत्वस्यैवासंभवात् । तथाहि—सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणाश्रयस्य चेतनाचेतनवर्गस्य ब्रह्मस्वरूपान्तर्भावे प्रमाणाभावात् । न च विशेष्यांशस्य लक्षणं 'सत्यं ज्ञानमनन्तम्' [तै० २।१।१] इति विशिष्टस्य जिज्ञास्यस्य ब्रह्मणस्तु लक्षणं जन्माद्येवेति सूत्रकाराभिप्राय इति जन्मादिसूत्रे व्यासार्यैरुक्तमिति वाच्यम् । कारणशोधकवाक्ययोर्भिन्नविषयत्वस्यासंमतत्वात् । आत्मन आकाशः संभूतः [तै० २।१] इत्यात्मन एवोपादानत्वाभिधानाच्च । किं च—

न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सता मात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥
प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
अव्यक्तं पुरुषे ब्रह्म निष्कले संप्रलीयते ।

तमः परे देव एकी भवतीति प्रमाणप्रतिपन्नस्याव्यक्ततमःशब्देन लयाधिष्ठानभूतस्यैवाक्षरात्परतः पर इति चिदचित्कारणभूतस्यैव प्रतिपिपादयिषिततया तत्र चिदचिदनुप्रवेशस्य वक्तुं शक्यत्वाच्चिदचिल्लेशलक्षणासदंशानुप्रवेशे सता मात्रात्मकत्वभङ्गप्रसङ्गात् । अस्तु वा विशिष्टं ब्रह्म तथाऽपि 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' [छा० ६।१।४] इतिश्रुतावेकविज्ञानेन सर्वविज्ञानस्योपादानोपादेयाभेदेनैवो-

पपादिततयेहेदं सर्वमिति, इदंतास्पदतया प्रतीयमाने विशेषणभूते जगति विशिष्टाभेदासंभवाच्छरीरगतावस्थायाः शरीरिनिष्ठत्वमिति यदुक्तं तत्तु सर्वलौकिकतान्त्रिकविरुद्धम् । 'न तु दृष्टान्तभावात्' [ब्र० सू० २।१।९] इतिसूत्रभाष्यविरुद्धं च । पूर्वावस्थाश्रयनियन्तृत्वमेवोपादानत्वमित्यस्य परिभाषामात्रत्वात् । किंचोत्पाद्यं ह्युपादेयं भवति उत्पाद्यं च भवन्मतेन द्रव्यं तस्य नित्यत्वाच्छब्दस्पर्शादिलक्षणाया द्रव्यरूपावस्थाया एवोत्पत्तेस्तस्याश्च ब्रह्मणाऽभेदगन्धस्यैवाभावात् । ननु घटत्वावस्थैव घटद्रव्यस्योत्पत्तिर्मृत्पिण्डस्य विनाशश्च द्रव्यस्योत्तरोत्तरसंस्थानयोगस्तत्पूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थस्य तूत्पत्तिः । अवस्थाया उत्पत्तिमत्त्वचोदनमुत्पत्तेरुत्पत्तिमत्त्वचोदनमिव जात्युक्तिर्भवति । पृथक्प्रतिपत्तिकार्यार्हाणामेव पृथगुत्पत्त्यादिकमपेक्ष्यते । पृथक्प्रतिपत्तिकार्यानर्हधर्माः पृथगुत्पत्तिनिरपेक्षाः । अत एव ह्युत्पत्तेरुत्पत्त्यादिनैरपेक्ष्यम् । तस्मादपृथक्सिद्धधर्मास्तु स्वयं धर्मिण उत्पत्त्याद्यवस्थाभूता अतोऽवस्थैव वस्तुन उत्पत्तिर्नत्ववस्थाश्रयोत्पत्तिर्नामास्तीत्यारम्भणाधिकरणभाष्यश्रुतप्रकाशिकयोरुपपादितमिति चेन्न । घटत्वावस्थाया एव घटोत्पत्तिमृत्पिण्डविनाशरूपत्वे यावद्घटत्वावस्थासत्त्वं घट उत्पद्यते मृत्पिण्डो नश्यतीति प्रसङ्गो न तु घट उत्पन्नो मृत्पिण्डो विनष्ट इति । न च घटत्वावस्थागताद्यक्षणसंबन्ध एव घटस्योत्पत्तिरिति वाच्यम् । यस्य ह्यागन्तुकत्वमाद्यक्षणसंबन्धोऽभूत्वा भवनं वा स तस्योत्पत्तिः । यस्य तु तन्नास्ति तस्योत्पत्तिरित्यस्य परिभाषामात्रत्वात् । घटे रूपरसादिषु संयोगे च जायमाने तदाश्रयोत्पत्तिव्यवहाराभावादन्यतरकर्मज उभयकर्मजः संयोग इत्यादि प्रतीतिव्यवहारादिकं सर्वं निर्मूलं स्यात् । 'छन्दांसि यज्ञाः क्रतवो व्रतानि' [श्वे० ४।९] छन्दांसि जज्ञिरे तस्मादित्यादीनां वेदोत्पत्तिप्रतिपादकानामप्रामाण्यं स्यात् । शब्द उत्पन्न इति प्रतीतिव्यवहारौ न स्यातामाकाश उत्पन्न इत्येव प्रतीतिव्यवहारौ स्यातामपृथक्सिद्धधर्माणामुत्पत्तिविनाशाभावे शरीरस्योत्पादविनाशौ न स्याताम् । आत्मन एव तौ स्यातां किं बहुनेश्वरव्यतिरिक्तस्य कस्याप्युत्पादविनाशौ न स्यातामीश्वरस्यैव स्याताम् । नन्वपृथक्सिद्धस्याद्रव्यस्यैवोत्पत्तिविनाशौ नाभ्युपेयेते द्रव्यस्य तौ स्त एवेति चेन्न । विनिगमकाभावाद्वैपरीत्यस्यापि सुवचत्वाच्च । किंच प्रकृतिरुपादानं विकार उपादेयमिति निर्विवादम् । वाचाऽऽरम्भणं

विकारो नामधेयमित्यत्र घटत्वावस्थाया एव विकारशब्देनाभिहिततया यथा सोम्यैकेन मृत्पिण्डेन सर्वमिदं मृन्मयं विज्ञातं स्यादिति पूर्ववाक्येऽपि विकारार्थमयट्प्रत्ययेन तस्या एवाभिधातुमुचिततया तस्या एवोपादेयत्वं सिद्धवत्कृत्य विज्ञातत्वाभिधानात्। भवन्मते चावस्थाया ज्ञातत्वासंभवादनुपपत्तिस्तदवस्थैव। न च सर्वं मृन्मयं विज्ञातं स्यादित्यत्र मयट्प्रत्ययार्थविकारस्त्ववस्थावान्। वाचाऽऽरम्भणं विकार इत्यत्रावस्था विकारशब्देनोच्यते मृत्तिकेत्येव सत्यमित्यभेदप्रतिपादनांशेऽनुषक्तेन मृन्मयमिति पदेन पुनरप्यवस्थावान्विकारः परामृश्यत इति वाच्यम्। अस्या उक्तेः परिहासमात्रफलत्वात्। तस्मात्सर्वं मृन्मयं वाचाऽऽरम्भणं विकारो मृत्तिकेत्येव सत्यमितिस्थलत्रयेऽप्यैकरूप्यमेव वक्तव्यं तस्माद्विकाररूपावस्थाया युष्मन्मते ज्ञातत्वानभ्युपगमात्। एकविज्ञानेन सर्वस्य तदभिन्नस्य विकारस्य ज्ञानमनुपपन्नमिति चेदुच्यते— प्रकृतौ ज्ञातायां विकृतिर्ज्ञाता भवतीत्यस्यायमर्थः—प्रकृतिविकृत्योः कारकव्यापारवैयर्थ्यप्रसङ्गाद्भेदसत्त्वेऽपि पृथक्स्थितिप्रतिपत्त्यनर्हत्वेन पृथक्सत्ता नास्तीति सिद्धम्। ततश्चाभिन्नसत्ताककारणमुपादानं प्रकृतिरात्मेति पर्यायास्तत्र च नैयायिकास्तदेव स्फुटतरविवेकप्रकाशरहितमयुतसिद्धं कारणं समवायिकारणमिति व्यवहरन्ति। कार्यभिन्नाभिन्नं कारणमुपादानमिति भेदाभेदवादिनो भिन्नतयाऽभिन्नतया वा दुर्वचं कारणमिति केचित्। भिन्नत्वे सति अभिन्नसत्ताकं कारणमित्युच्यते। अस्माकं तु भिन्नयोरभिन्नयोरप्युपादानत्वाभ्युपगमादाभिन्नसत्ताककारणत्वलक्षणमपृथक्सिद्धकारणत्वमेवोपादानत्वमिति संमतम्। घटशरावादिरूपावस्थैव विकारो घटशरावादिनानासंस्थानावस्थारूपविकारापन्नं नानानामधेयमपि मृत्तिकासंस्थानविशेषत्वान्यद्द्रव्यमेवेत्थमवस्थितमिति वेदार्थसंग्रहेऽवस्थाया विकारत्वकथनात्तस्य च मृदश्च दण्डघटयोरिव पृथक्स्थितिप्रतिपत्त्योरभावात्तदपृथक्सिद्धत्वेन घटापृथक्सिद्धकारणत्वरूपोपादानत्वस्य मृदि सत्त्वान्मृदो घटशरावादिप्रकृतित्वमात्मत्वं च ततश्च तस्यां मृदि ज्ञातायां घटशरावादिलक्षणतदवस्थारूपविकृतीनां पृथक्स्थितिप्रतिपत्त्यनर्हाणां मृत्सत्तया सत्तावत्त्ववन्मृज्ज्ञाततयैव ज्ञातताश्रयत्वात्सर्वमिदं ज्ञातमिति शक्यते वक्तुमेवं ब्रह्मणोऽपि चेतनाचेतनसमस्तप्रपञ्चं प्रत्यपृथक्सिद्धकारणत्वेन सर्वप्रकृतित्वेन सर्वात्मतया ततो भिन्नत्वेन प्रदर्शनायोग्यतया ज्ञातत्वं सिद्धम्। ननु भाष्ये केवलमे-

द्वादिनं चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशो न संभवतीति सर्ववेदान्तपरित्यागः स्यादिति केवलभेदस्य प्रतिक्षिप्तत्वात्—

एकत्वे सति नानात्वं नानात्वे सति चैकता।
अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति॥

इतिस्मृतिवशाज्जगद्ब्रह्मणोर्भिन्नाभिन्नत्वमेव भगवतो भाष्यकाराभिमतम्। ततश्च कार्याभिन्नं कारणमुपादानमित्येवास्तु। एवं सति सर्वस्यापि तदभिन्नत्वात्सर्वविज्ञानमप्युपपद्यते।

हरेर्न किंचिद्व्यतिरिक्तमस्ति एकः समस्तं यदिहास्ति किंचित्।
तदुच्यते नास्ति परं ततोऽन्यदेकं सदेकं परमः परेशः॥

स वासुदेवो न यतोऽन्यदस्तीत्यादिनिषेधाश्च केवलभेदाश्रयनिषेधकतयोपपद्यन्ते केवलभेदपक्षे शरीरभूतस्य जगत आत्मभिन्नत्वाद्भिन्ननिषेधो नोपपद्यतेऽतः कार्याभिन्नं कारणमुपादानमित्येवास्त्विति चेन्न। भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात्तत्प्रयुक्तजीवगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मभावोपदेशाविरोधादेव परित्यक्ताः स्युरिति तत्रैव भेदाभेदपक्षस्य भाष्ये दूषितत्वात्। ब्रह्माज्ञानपक्षादपि पापीयानयं भेदाभेदपक्ष इति वेदार्थसंग्रहे निन्दितत्वाद्भेदाभेदवादो न भाष्यकाराभिमतः। ननु यदि भेदाभेदो न भाष्यकृदभिमतः कथं तर्हि केवलभेदवादिनां चात्यन्तभिन्नयोरिति भाष्यमुपपद्यतां शरीरात्मभावो ह्यत्यन्तभेद एव प्रकारप्रकारिभावो हि भेदरूपो नियमेन प्रकारप्रकारिभावलक्षणः शरीरशरीरिभावो हि नियमेन भेदरूप इति शरीरात्मभावे केवलभेद एव दृढीकृतो भवति। अत एव हि उभयेऽपि हि भेदेनैनमधीयत इति शरीरात्मभाव एव भेदत्वेन वर्णित इति चेदुच्यते—अत्यन्तभिन्नयोरित्यादिभाष्यस्यायं भावः—लोके ह्यैक्यव्यवहारे स्वरूपैक्यं तन्त्रं तदभावे देशादिलक्षणप्रकारैक्यं यथा सायं गोष्ठे सर्वे गाव एकी भवन्ति। राजान एकीभूता एको व्रीहिरित्यादौ देशबुद्धिजात्याद्यभेदत इह तु जगद्ब्रह्मणोः स्वरूपतो भिन्नयोः केनचिदाकारेणाभेदो वक्तव्यः स क इतिविचारेऽपृथक्सिद्धविशेषणत्वमिति सहस्रकृत्वोऽभ्यस्तापृथक्सिद्धपदप्रयोगात्सिद्ध्यैक्यमेव भाष्यकृदभिमतमिति प्रतीयते। सिद्धिर्नाम स्थितिप्रतिपत्तिश्च पृथक्स्थितिप्रतिपत्तियोग्य इति भाष्यादिग्रन्थेषु बहुशो व्यवहारदर्शनात्स्थितिप्रतिपत्त्योरैक्यमवयवावयविजातिव्यक्तिगुणगुणिस्थलेषु पृथक्स्थिति-

प्रतिपत्त्योरभावादवसीयते । ननु घटो भूतले वर्तते नीलादिगुणस्तु घटे तथा गन्धरसशब्दानां द्रव्यप्रतिपत्तिमन्तरेणापि पृथक्प्रतिपत्तिर्दृष्टाऽतः कथं स्थितिप्रतिपत्त्यैक्यमुपपद्यताम् । न च तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोरवश्यमेकमपराश्रितमेवावतिष्ठत इति तार्किकोक्तमयुतसिद्धत्वमेवापृथक्सिद्धत्वमिति वाच्यम् । तथा हि सति विनियताश्रयाश्रयिभावलक्षणायुतसिद्धत्वस्य भेदैकसाधकत्वेन प्रकारैक्यासाधकत्वादिति चेन्न । पृथक्प्रतिपत्तिकार्यार्हाणामेव पृथगुत्पत्त्यादिकमपेक्षितमित्यादिश्रुतप्रकाशिकाग्रन्थपर्यालोचनायां यस्योत्पत्तिविनाशापक्षयसत्तादिकमाश्रयोत्पत्त्यादिनैव व्यवह्रियते तत्तदपृथक्सिद्धमिति फलति । ततश्च यदुत्पत्त्योत्पद्यत इति व्यवह्रियते यत्सत्तया सदिति व्यवह्रियते न तु सत्तान्तरमपेक्षते तत्तदपृथक्सिद्धमिति । ततश्च विकृतेः प्रकृतिसत्तातिरिक्तसत्ताशून्यत्वादभिन्नसत्ताकं कारणत्वमुपादानत्वं तदेव चाऽऽत्मत्वं तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मेति वदतो भगवतो भाष्यकारस्याप्यभिमतम् । नह्यत्राऽऽत्मत्वमन्तःप्रविश्य नियन्तृत्वरूपं तादृशात्मत्वस्योपादानत्वाप्रयोज्यत्वात् । नह्युपादानत्वनियन्तृत्वाभ्यां न निर्वाह्यमात्मत्वं नियन्तृत्वरूपं भवति, अस्मदुक्तमात्मत्वं तूभयनिर्वाह्यं भवति । कथमुच्यते—तज्जत्वादिनाऽचेतनांश उपादानत्वलक्षणमात्मत्वं फलति तन्नियाम्यत्वादित्यनेन जीवरूपेण नियन्तृत्वं विवक्षितं जीवापृथक्सिद्धमिति यावत् । ततश्च चेतनवर्गस्यापृथक्सिद्धकारणत्वलक्षणमुपादानत्वमुक्तं भवति । ततश्च ब्रह्मव्यतिरिक्तचेतनाचेतनवर्गं प्रति ब्रह्मणोऽपृथक्सिद्धकारणत्वलक्षणाभिन्नसत्ताकारणत्वरूपोपादानत्वप्रकृतित्वापरपर्यायत्वस्य सत्त्वादात्मभूते तस्मिञ्ज्ञात इतरत्सर्वं ज्ञातमेव । इतरस्य पृथक्प्रतिपत्तियोग्यस्य ज्ञातव्यस्याभावात्तत्सत्तया सदिति व्यवहारवत्तज्ज्ञाततया ज्ञातमिति व्यवहर्तुं शक्यत्वात् । न च प्रपञ्चस्य ब्रह्मसत्ताव्यतिरिक्तसत्ताभावे मृषावादिमतवन्मिथ्यात्वं स्यादिति वाच्यम् । यथा गुणगतजात्यनभ्युपगन्तृमते रूपादौ सद्बुद्धेर्द्रव्यगतसत्ताविषयत्वेऽपि न रूपादिमिथ्यात्वम् । यथा वा द्रव्यगतगुणादिषु द्वित्वैकत्वादिसंख्याप्रतीतेर्द्रव्यगतसंख्यानिर्वाह्यत्वेऽपि रूपादिगतसंख्याप्रतीतेर्न भ्रान्तित्वम् । यथा वा सिद्धान्ते घटत्वाद्यवस्थाया मृद्द्रव्यापेक्षयोत्पत्तिस्थितिसत्तानां पार्थक्याभावेऽपि न तत्रोत्पत्तिस्थितिसत्ताप्रतीतेर्भ्रान्तित्वम् । एवं प्रपञ्चगतसत्ताप्रतीतेर्ब्रह्मसत्तानिर्वाह्यत्वेऽपि न तत्स-

स्वप्रतीतेर्भ्रान्तित्वं न वा प्रपञ्चस्य मिथ्यात्वम्। अत एव नैकस्मिन्नसंभवात् [ ब्र० सू० २।२।३३ ] इति सूत्रे कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः। कालोऽस्तीति व्यवहारो जात्याद्यस्तित्वव्यवहारतुल्य इति स्पष्टं भाषितम्। अतो ब्रह्मसत्ताव्यतिरिक्तसत्ताशून्यत्वेऽपि प्रपञ्चस्य न मिथ्यात्वम्। नन्वपृथक्सिद्धकारणत्वमुपादानत्वं तदेवाऽऽत्मत्वं चेद्भगवद्विग्रहगोपुरप्राकारनित्यसूरिप्रभृतिनित्यविभूतिं प्रत्यात्मत्वं न स्यात्कारणत्वाभावेनोपादानत्वाभावात्। ननु च 'प्रतिज्ञाहानिरव्यतिरेकात्' [ ब्र० सू० २।३।६ ] इतिसूत्रे वियदादेर्ब्रह्मण उत्पत्त्यनभ्युपगम एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानिप्रसङ्गाद्वियदाद्युत्पत्त्यभ्युपगमवन्नित्यविभूतेरप्युपादेयत्वमभ्युपगन्तव्यमितरथा सर्वविज्ञानप्रतिज्ञाहानिप्रसङ्गात्। न च नित्यविभूतेर्नित्यत्वग्राहकप्रमाणानुसारात 'येनाश्रुतं श्रुतं भवति' [ छा० ६।१।३ ] सर्वमिदं विज्ञातं भवतीत्यादावश्रुतादिशब्दानां नित्यविभूतिव्यतिरिक्तपरतया संकोचः क्रियतामिति वाच्यम्। आकाशवत्सर्वगतश्च नित्यो वायुश्चान्तरिक्षं चैतदमृतम्। आकाशं नित्यनिरवयवद्रव्यत्वादित्यादिप्रमाणबलेनाश्रुतादिशब्दानामाकाशव्यतिरिक्तपरत्वमेव स्यादित्याकाशप्रतिबन्धाददुर्मोचत्वमेव स्यादिति चेन्न। नित्यविभूतेर्नित्यत्वानभ्युपगमे बहुप्रमाणसंक्षोभप्रसङ्गात्। अश्रुतादिशब्दानां नित्यविभूतिव्यतिरिक्तपरतया संकोचाभ्युपगमेऽपि वियन्नित्यत्वप्रतिपादकप्रमाणस्याऽऽपेक्षिकनित्यत्वपरतयाऽप्युपपन्नस्य प्रतिपिपादयिषितसर्वविज्ञानप्रतिज्ञासंकोचकत्वायोगात्। न च वाक्यकारे रूपं चातीन्द्रियमन्तः करणप्रत्यक्षनिर्देशादिति यथा ज्ञानादयः परस्य ब्रह्मणो रूपतया निर्देशात्स्वरूपभूता गुणास्तथेदमपि रूपं श्रुत्या स्वरूपतया निर्देशात्स्वरूपभूतमित्युक्तत्वात्, 'यदात्मको भगवांस्तदात्मिका भगवतो व्यक्तिः' इति श्रुतेर्भगवद्विग्रहादिकं सर्वमात्मस्वरूपादव्यतिरिक्तमित्येवाभ्युपगम्यताम्। एवं चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि न क्लिशिता भवति। न च वापीकूपारामादीनां कथं ब्रह्मरूपत्वमिति वाच्यम्। वापीकूपोद्यानादिप्रतिपादकवाक्यानां तत्तत्क्रीडाजनितसुखानां ब्रह्मानुभवाम्बुनिधिलवकणिकायमानत्वमित्यत्र तात्पर्यात्। यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितं सर्वाणि च भूतानि सर्वे च कामा इति वाक्यस्य ब्रह्मणः सर्वविधभोग्यत्वमस्ती-

त्यत्र तात्पर्यमिति दहराधिकरणे भाष्यश्रुतप्रकाशिकयोः स्थितत्वादिति चेन्न । अर्चिरादिमार्गेण विरजानदीमतिक्रम्य गन्तव्येऽप्राकृते लोके तदैरंमदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मण इत्यादिवाक्यप्रतिपन्नानां सरोश्वत्थादीनां ब्रह्मस्वरूपमात्रत्वस्य वक्तुमशक्यत्वात् ।

द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥

इति अमूर्तशब्दितमुक्तात्मस्वरूपस्यापि शरीरवाचिना रूपशब्देन निर्देशेन मुक्तात्मस्वरूपस्य परब्रह्मस्वरूपताया वक्तुमशक्यत्वात् । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' [तै० २ । १ ।] स तत्र पर्यैतीत्यादिभिर्मुक्तानां ब्रह्मणश्च भोक्तृभोग्यतयाऽऽधाराधेयभावेन च भेदप्रतीत्या नित्यसूरीणां ब्रह्मस्वरूपमात्रत्वासंभवात्तान्प्रत्यपि च परमात्मन आत्मत्वस्य वक्तव्यत्वान्नित्यसूर्यादीनां नित्यतया तान्प्रत्युपादानत्वलक्षणात्मत्वासंभवात्कथं तस्य सर्वात्मत्वं सिद्धमिति चेत् । यदि नित्यपदार्थान्प्रत्यप्यात्मत्वं परमात्मनो वक्तव्यमिति निर्बन्धस्तर्हि तान्प्रत्यात्मत्वमुपादानत्वैकदेशभूतमपृथक्सिद्धाश्रयत्वमेव तत्राऽऽत्मशब्दप्रवृत्तिनिमित्तमस्तु इतरत्रोपादानत्वमेतद्रूपं चाऽऽत्मत्वं तज्जत्वादिभिरुपपाद्यमिति नानुपपत्तिः । ततश्चोपादाने ज्ञाते तदपृथक्सिद्धमपि ज्ञातं भवतीति एकविज्ञानेन सर्वविज्ञानमुपपन्नं भवति । यद्वा यथा को भवानिति सौवीरराजप्रश्नस्य प्रकृतिसंसृष्टात्मविषयत्वेऽपि वस्तुगत्या भवच्छब्दमुख्यार्थत्वं परिशुद्धात्मस्वरूपस्यैवोचितमिति मत्वा तस्यैव भवच्छब्दमुख्यार्थत्वं प्रदर्शयन्नादिभरतो यदा समस्तभूतेषु पुमानेको व्यवस्थितः। यद्यन्योऽस्ति परः कोऽपीत्यादि प्रत्यवोचत् । यथा वाऽथर्वशिरसि रुद्रं प्रति देवैः प्रयुक्तस्य को भवानिति प्रश्नस्य पुरोवर्तिरुद्रमात्रपरत्वेऽपि भवच्छब्दस्य परमात्मपर्यन्तत्वशिक्षणायाहमेकः प्रथममासमित्यादि प्रतिवचनप्रवृत्तिः । एवं सर्वमिदं विज्ञातमिति प्रश्नस्य विशेषणमात्रपरत्वेऽपि विशेष्यमात्रपरत्वं तत्र शिक्षणाय स्थूलचिदचिच्छरीरकं ब्रह्म प्रति सूक्ष्मचिदचिच्छरीरकं ब्रह्मैवोपादानमित्येतदर्थप्रतिपादकस्य प्रतिवचनसंदर्भस्य प्रवृत्तौ दोषाभावादिति प्रपञ्चितं चेदमस्माभिर्बृहदारण्यकप्रकाशिकायामित्यलमतिचर्चया ॥ ३ ॥

तस्मै स होवाच ।

स्पष्टोऽर्थः ।

द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति ।

अत्र प्राप्तुमित्यध्याहारः । यद्वस्तु प्राप्तुं द्वे विद्ये ज्ञाने उपादेयभूते इति ह वेदाभिज्ञाः पराशरादयः ।

तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने ।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥

शब्दब्रह्मागममयं परं ब्रह्म विवेकजमिति यद्वदन्ति तज्ज्ञाने सर्वमिदं विज्ञातं भवतीत्यर्थः । एतत्सर्वमभिप्रेत्य भगवता भाष्यकृता द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा चेति ब्रह्म प्रेप्सुना द्वे विद्ये वेदितव्ये ब्रह्मविषये परोक्षापरोक्षरूपे द्वे ज्ञाने उपादेये इत्यर्थ इति भाषितम् । एतेन परविद्याया ब्रह्मप्रेप्सूपादेयत्वेऽपि अपरविद्यायास्तथात्वाप्रतीतेः । अथ परा यया तदक्षरमधिगम्यत इति वाक्यपर्यालोचनयाऽपरविद्याया ब्रह्मप्रेप्सूपादेयत्वाभावस्यैव प्रतीतेः । ब्रह्म प्रेप्सुना द्वे विद्ये उपादेये इति भाष्यं कथमिति शङ्काऽपि निरस्ता । प्राप्तुमितिपदाध्याहारेणास्यार्थस्य प्रतीतेः । इतरथा यत्पदवैयर्थ्यात् । किंच कस्मिन्नु भगव इति सर्वोपादाने पृष्टे विद्याद्वयमाम्रान्पृष्टः कोविदारानाचष्ट इति न्यायमनुसरेत । अतो यथोक्त एवार्थः । ओदनपाकं पचतीतिवद्द्वे विद्ये वेदितव्ये [इति]निर्देशः । के ते विद्ये इत्यत्राऽऽह—

परा चैवापरा च ॥ ४ ॥

इति । परमपरमिति ज्ञानं द्विविधमित्यर्थः ॥ ४ ॥

तत्र सूचीकटाहन्यायेनापरज्ञानस्वरूपमाह—

तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणन्यायमीमांसाधर्मशास्त्राणीति ।

षडङ्गोपेतसशिरस्कसकलोपबृंहणवेदश्रवणजन्यं ज्ञानं परोक्षज्ञानमित्यर्थः ।

अपरविद्यामुक्त्वा परविद्यामाह—

अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

अत्र तच्छब्द इति ह स्म यद्ब्रह्मविद इति यच्छब्दप्रतिनिर्देशकः ।

येन ज्ञानेनेति ह स्म ब्रह्मविद इति वाक्ये प्राप्यतया निर्दिष्टं तदक्षरमधिगम्यत इति । आधिक्येन गम्यतेऽपरोक्षी क्रियत इत्यर्थः । विवेकादिसाधनसप्तकजन्यं श्रवणजन्यपरोक्षज्ञानानन्तरभाविदर्शनसमानाकारज्ञानं परज्ञानमित्यर्थः । एतेनाधिगम्यत इत्यस्य ज्ञायत इति वा प्राप्यत इति वाऽर्थस्याऽऽश्रयणीयतया परविद्याया एव ब्रह्मविषयत्वब्रह्मप्राप्तिहेतुत्वयोः सिद्धावपरविद्याया ब्रह्मविषयत्वतत्प्राप्तिहेतुत्वयोरभावेनापरविद्याया अपि ब्रह्मविषयत्वतत्प्राप्तिहेतुत्वप्रतिपादकभाष्यासंगतिः । किंच परविद्याया अपरोक्षज्ञानरूपत्वे प्रमाणानुपलम्भादपरोक्षत्वप्रतिपादकभाष्यस्याप्यसंगतिरिति दूषणं परास्तम् । अधिगम्यत इत्यस्यापरोक्षी क्रियत इत्यर्थकत्वात् । नन्वेतदुपबृंहणे श्रीविष्णुपुराणे----

द्वे विद्ये वेदितव्ये इति चाऽऽथर्वणी श्रुतिः ।
परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयाऽपरा ॥ इति ।

अधिगम्यत इत्यस्य प्राप्त्यर्थतयोपबृंहितत्वात्कथमिदमुच्यत इति चेन्न । यदि उपबृंहणानुसारेण प्राप्त्यर्थकतया व्याख्यातव्यमिति निर्बन्धस्तर्हि, इति ह स्म यद्ब्रह्मविदो वदन्तीति पूर्ववाक्ये परापरविद्ययोर्द्वयोरपि ब्रह्मप्राप्तिहेतुत्वस्य कथितत्वेन यया तदक्षरमधिगम्यत इत्यस्यापरविद्याव्यावर्तकत्वाभावप्रसङ्गेन तद्व्यावर्तकत्वार्थं साक्षादिति पदमध्याहृत्य यया साक्षादक्षरमधिगम्यते प्राप्यते सा परविद्येत्यस्तु । अपरोक्षत्वं त्वर्थाल्लभ्यते श्रुत्यन्तरे 'निचाय्य तन्मृत्युमुखात्प्रमुच्यते' [का०३।१५] 'तस्मिन्दृष्टे परावरे' [मु०२।२।८] इत्यादिदर्शनादिति द्रष्टव्यम् । ननु 'स्वाध्यायस्य तथात्वेन' [ब्र० सू० ३।३।३] इति सूत्रे तेषामेवैतां ब्रह्मविद्यां वदेतेत्युपसंहारगतब्रह्मविद्याशब्दस्य ब्रह्मविद्यां वेदविद्यामित्युपनिषत्परतया भाष्यकृता व्याख्यातत्वात् । 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' [मु०१।२।१३] इति द्वितीयखण्डगतब्रह्मविद्याशब्दस्यापि तत्परत्वस्यौचित्यादुपक्रमे च ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहेत्युक्तिकर्मतया श्रूयमाणाया ब्रह्मविद्याया उपनिषद्ग्रन्थरूपत्वस्यैवौचित्यात् । तत्रापरा- ऋग्वेदो यजुर्वेदः सामवेद इत्यत्र ऋग्वेदादिशब्दानां तज्जन्यज्ञानलक्षणाया अयुक्तत्वेन विद्याशब्दस्य ग्रन्थपरत्वाश्रयणस्य युक्तत्वात् । परविद्याशब्देनापि साक्षाद्ब्रह्मप्रापकोपनिषद्ग्रन्था एवाभिधातुमुचितत्वात् । ततश्च परोक्षापरोक्षरूपज्ञानपरत्वेन युक्तं पश्याम इति चेदत्रोच्यते—यदि परविद्याशब्देनोपनिषद्ग्रन्थसंदर्भविशेषं प्रतिपाद्य

ऋग्वेदादिशब्देन मुख्यया वृत्त्या, ऋग्वेदादय एव प्रतिपाद्यास्तर्हि ब्रह्म-प्रतिपादकोपनिषदामृग्वेदादिबहिर्भावप्रसङ्गेन या वेदबाह्याः स्मृतय इत्युक्तरीत्याऽसदर्थत्वमेव स्यात् । ऋग्वेदादिशब्दानां मुख्यार्थमाश्रितव-द्भिरपि परैरुपनिषदां वेदबाह्यत्वप्रसङ्गात्परविद्याशब्दो ज्ञानवाचीत्युक्तम् । इयांस्तु विशेषः—परमते द्वे विद्ये वेदितव्ये इत्यत्र सकृत्प्रयुक्त एव विद्या-शब्दः सत्यपि साधारणे प्रवृत्तिनिमित्तऋग्वेदादिग्रन्थसंदर्भलक्षणापर-विद्यां ब्रह्मज्ञानलक्षणां पराविद्यां च वक्तीति दोषोऽस्तीति । अस्मन्मते स नास्ति । किंच परव्याख्याने ऋग्वेदादिवेद्यविलक्षणत्वाद्ब्रह्मणो वेदैश्च सर्वैरहमेव वेद्यः [गी० १५।१५] इति स्मृतिः पीड्येतात ऋग्वेदादिजन्यं ब्रह्मविषयकमेवेत्येव युक्तम् । अतः परापरज्ञानशब्दितपरोक्षापरोक्षज्ञान-विषयत्वं ब्रह्मण एवेति भाष्यकारीया रीतिरेव साधीयसी ॥ ५ ॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-
पाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं
तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

अद्रेश्यमदृश्यं ज्ञानेन्द्रियाविषयः । अग्राह्यं पाण्यादिकार्यहानोपादा-नाद्यविषयः । अगोत्रं कुलरहितम् । अवर्णमपेतब्रह्मक्षत्रादिकम् । अचक्षुःश्रोत्रं ज्ञानेन्द्रियरहितम् । तत्प्रसिद्धम् । अपाणिपादं कर्मेन्द्रिय-रहितम् । नित्यं कालापरिच्छिन्नम् । विभुं देशापरिच्छिन्नम् । सर्वगतं सर्वत्रान्तः प्रविश्यावस्थितम् । तत्र हेतुमाह—सूक्ष्ममिति । उक्तविशेष-विशिष्टं यत्तदव्ययम् । अथ परा यया तदक्षरमित्यत्राक्षरशब्दनिर्दिष्ट-मित्यर्थः । यद्भूतयोनिं परिपश्यन्ति धीराः । प्रज्ञाशालिनो यत्तत्सर्व-भूतोपादानतया पश्यन्तीत्यर्थः । योनिशब्दस्योपादानवचनत्वं 'यथोर्ण-नाभिः सृजते गृह्णते च' [ मु० १।१।७ ] इति वाक्यशेषादवगम्यत इति प्रकृत्यधिकरणे भाषितम् ॥ ६ ॥

ननु भूतयोनिशब्दनिर्दिष्टं सर्वोपादानत्वं ब्रह्मणो न संभवति । घटा-दिषु मृद एवोपादानत्वदर्शनाद्ब्रह्मण उपादानत्वासंभवादित्याशङ्क्य मृदादिष्वपि ब्रह्मण आत्मतया व्याप्तत्वान्मृदादिरूपस्य ब्रह्मण उपादा-नत्वे नानुपपत्तिरित्यभिप्रयन्नाह—

यस्मात्परं नापरमस्ति किंचित् ।

अत्र परशब्द उत्कृष्टवचनः । अपरशब्दोऽन्यवचनः । यस्मादन्यदु-

त्कृष्टं नास्तीत्यर्थः । नात्र परापरयोर्द्वयोरपि निषेधः । तथा सति नञः सकृच्छ्रुतस्याऽऽवृत्तिप्रसङ्गात् ।

यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।

अणोरणीयान्महतो महीयानिति भावः । अणीयस्त्वं सूक्ष्मत्वं व्यापित्वमिति फलति । ज्यायस्त्वं सर्वेश्वरत्वं सर्वव्यापित्वात्सर्वेश्वरत्वादस्यैव, एतद्व्यतिरिक्तस्य कस्यापि ज्यायस्त्वमणीयस्त्वं च नास्तीत्यर्थ इति वेदार्थसंग्रहे व्याख्यातम् । कश्चिदिति लिङ्गव्यत्ययश्छान्दसः ।

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः ।

नन्तव्यवस्त्वभावादवृक्षवत्प्रणतस्वभावः सञ्जगत्प्रधानभूतः परमपदे आस्त इत्यर्थः ।

तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ७ ॥

नियमनार्थमन्तरप्रविष्टेन सर्वमिदं व्याप्तमित्यर्थः । अतश्च मृदादिकशरीरकस्य ब्रह्मणो घटादावप्युपादानत्वसंभवाद्भूतयोनित्वं नानुपपन्नमिति भावः । अयं मन्त्रः केषुचित्कोशेषु न दृष्टः केश्चिद्व्याकृतो भाष्येऽपि न गणितः । तथाऽपि व्यासार्यैरक्षरपुरुषस्य यस्मात्परं नापरमस्तीति समाभ्यधिकनिषेधश्चोपक्रमावगत इत्यभिहितत्वान्न प्रक्षेपशङ्कार्ह इति द्रष्टव्यम् ॥ ७ ॥

ननु लोके उपादानस्य स्वभिन्ननिमित्तकारणसापेक्षत्वदर्शनादेकविज्ञानेन सर्वज्ञानमनुपपन्नम् । किंचैकस्य ब्रह्मणः परस्परविलक्षणानन्तप्रपञ्चोपादानत्वमपि न संभवति । किंच घटाद्युत्पत्तावुपादानभूतमृत्पिण्डादिषु पूर्वावस्थोपमर्दो दृश्यते । प्राकारोपादानभूतास्विष्टकासु चतुरस्रत्वादिलक्षणपूर्वाकारतिरोधानं दृश्यते । अक्षरशब्दितस्य निर्विकारस्य ब्रह्मणः पूर्वाकारोपमर्दतिरोधानयोरसंभवेनोपादानत्वं न संभवतीत्याशङ्क्याऽऽह—

यथोर्णनाभिः सृजते गृह्णते च ।

यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं जनार्दनः ॥

इत्युक्तरीत्या यथा लूताख्यकीटविशेषस्य स्वान्तःस्थिततन्तुनिःसारणतत्प्रवेशनयोर्निरपेक्षकर्तृत्वम् ।

यथा पृथिव्यामोषधयः संभवन्ति ॥

यथैकस्या एव पृथिव्याः पूर्वावस्थोपमर्दतिरोधानाभावेऽपि विलक्षणानन्तौषध्युपादानत्वम् ।

यथा सतः पुरुषात्केशलोमानि ।

यथा जीवतः पुरुषस्य चेतनस्याचेतनकेशलोमाद्युपादानत्वम् ॥

तथाऽक्षरात्संभवतीह विश्वम् ॥ ८ ॥

एवमेव निमित्तान्तरनिरपेक्षादुपादेयविलक्षणान्निर्विकारात्परमात्मनः परस्परविलक्षणं चेतनाचेतनात्मकं निखिलं जगत्संभवतीत्यर्थः ॥ ८ ॥

ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते

तपसा चीयते ब्रह्म ।

तपसा ज्ञानेन यस्य ज्ञानमयं तप इति वक्ष्यमाणत्वात । चीयत उपचीयते बहु स्यामिति संकल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः ।

ततोऽन्नमभिजायते ।

'अद्यतेऽत्ति च भूतानि' [तै० २।२।१ ]इति भोग्यभोक्तृरूपचेतनाचेतनसंघातलक्षणमव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः ।

अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ९ ॥

तस्मात्समष्टिरूपचिदचित्संघातात्मकादन्नशब्दितादव्याकृतान्मुख्यः प्राणोऽन्तःकरणं सत्यशब्दितो भोक्तृवर्गः स्वर्गादयो लोकाः कर्मसु आयत्तममृतं चामृतत्वसाधकं कर्मेति यावत । अथवा कर्मस्विति निर्धारणे सप्तमी कर्ममध्ये मोक्षार्थं कर्मेत्यर्थः । एतत्सर्वमभिजायत इति पूर्वेणान्वयः। एतत्सर्वं भाष्यश्रुतप्रकाशिकयोः स्पष्टम् ॥ ९ ॥

पूर्वमन्त्रोक्ततपःशब्दं विवृण्वन्भूतयोनिशब्दितस्य ब्रह्मणः सृष्ट्युपकरणं सार्वज्ञ्यं दर्शयति—

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।

सर्वज्ञः सर्वविषयकज्ञानवान् । सर्वविसत्तद्वस्तुगतसर्वप्रकारकज्ञानवान् । स्वरूपतः प्रकारतश्च सर्वविषयकज्ञानवत्त्वमस्मिन्मन्त्रे भूतयोनेर्विशेषमप्राप्तत्वात । यस्य ज्ञानमयं तप इत्यनेनांशेन पूर्वमन्त्रोक्ततपःशब्दवि-

चरणं यस्य ब्रह्मणः संकल्परूपज्ञानव्यतिरेकेण जगत्सृष्ट्युपयुक्तं कर्मान्तरं नास्तीत्यर्थः ।

ततोऽन्नमभिजायत इत्यादिकमनुवदति—

तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ १० ॥

---

इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥

तस्मात्संकल्पेन सृष्ट्युन्मुखाद्ब्रह्मणः । ततोऽन्नमभिजायत इत्यत्रान्नशब्दनिर्दिष्टमेतत् । अव्याकृताख्यं ब्रह्म साक्षाज्जायते तद्द्वारा नामरूपवत् । अद्यतेऽत्ति च भूतानीति अन्नशब्दनिर्दिष्टभोग्यभोक्तृरूपं च जायत इत्यर्थः । यद्यस्मिन्नपि मन्त्रे सर्वज्ञत्वाद्यनुवादेन ब्रह्मशब्दिताव्यक्तादिहेतुत्वं विधीयत इति प्रतिभाति तथाऽपि तस्य पूर्वमन्त्रप्राप्तत्वेन विधेयत्वासंभवादप्राप्तस्य सर्वज्ञत्वस्यैव विधेयत्वमिति द्रष्टव्यम् । ननु सर्वज्ञसर्वविच्छब्दयोरपौनरुक्त्याय सर्वज्ञशब्दस्य रूढिरभ्युपगन्तव्या । कृशानुरेताः सर्वज्ञ इति निघण्टुपाठेन सर्वज्ञशब्दस्योमापतौ रूढत्वात् । तस्मात्सर्वविदो देवतान्तरान्निमित्तभूतात्तपसा चीयते ब्रह्मेति पूर्वमन्त्रनिर्दिष्टमुपादानं ब्रह्मान्यदेव भवितुमर्हति तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत इत्युपादानभूताद्ब्रह्मणो निमित्तभूतेश्वरस्य भेद एव प्रतीयत इति चेन्न । यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति तपसोपचीयमानतया पूर्वमन्त्रनिर्दिष्टस्याक्षरब्रह्मण एव सर्वज्ञत्वसर्वविस्त्वयोः प्रतीत्या तयोर्भेदासंभवात् । निमित्तोपादानभेदविवक्षायामेकविज्ञानेन सर्वविज्ञानासंभवेन कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीतिप्रश्नप्रतिवचनत्वासंभवेन प्रतिपिपादयिषितप्रधानार्थविरोधप्रसङ्गादित्यलमतिप्रसङ्गेन ॥१०॥

इत्यथर्ववेदीयमुण्डकोपनिषत्प्रकाशिकायां प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥

---

तदेतत्सत्यम् ।

नित्यमुत्पत्तिविनाशादिषड्भावविकारशून्यमित्यर्थः ।

मन्त्रेषु कर्माणि कवयो यान्यपश्यन् ।

अतीन्द्रियार्थसाक्षात्कारसमर्था वेदेषु यान्यग्निहोत्रकर्माणि दृष्टवन्तः ।

तानि त्रेतायां बहुधा संततानि ।

गार्हपत्यादिषु वैतानिकाग्निषु यावज्जीवं कर्तव्यतयाऽधिकारिभेदफलभेदेन बहुधा विहितानि ।

तान्याचरथ नियतं सत्यकामाः ।

स्वतः सत्यं परं ब्रह्मैव कामयमानाः फलाभिसंधिरहिताः सन्त इत्यर्थः । तानि कर्माण्याचरतानुतिष्ठत कर्मणां ब्रह्मप्राप्तिहेतुत्वज्ञानद्वारेति द्रष्टव्यम् । अमुमुक्षून्प्रत्याह—

एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥

पुण्यफलभूते लोके तु वक्ष्यमाणो मार्ग इत्यर्थः ॥ १ ॥

एवं ब्रह्मविद्याङ्गतया फलाभिसंधिरहितकर्मानुष्ठानं विधाय फलाभिसंधिपूर्वकस्य तु कर्मणोऽयथावदनुष्ठितस्य न प्रतिपदोक्तफलजनकत्वं प्रत्युत प्रत्यवायजनकत्वमेव । यथावदनुष्ठितस्यापि तस्य सत्यलोकपर्यन्तफलकत्वमेवेत्याह—

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।

यदेन्धनादिभिर्ज्वलितेऽग्नौ यस्मिन्काले ज्वाला चलति ।

तदाऽऽज्यभागावन्तरेणाऽऽहुतीः प्रतिपादयेत् ॥ २ ॥

तस्मिन्काल आज्यभागयोर्मध्य आहुतीः प्रक्षिपेदित्यर्थः ॥ २ ॥

यस्याग्निहोत्रमदर्शमपौर्णमासमनाग्रयणमतिथिवर्जितं च ।

अहुतमवैश्वदेवमश्रद्धयाऽविधिना हुतमा-

सप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥

दर्शपौर्णमासाख्येष्टयननुष्ठाने नवान्नस्वीकारार्थशरत्कालकर्तव्याग्रयणे-
विधिसत्कारोपासनहोमवैश्वदेवाननुष्ठाने श्रद्धा-
षयमेव कृतार्था इत्यभि[illegible]ऽनुष्ठितमप्यग्निहोत्रकर्म तस्य सुकृतफलं सर्वं
यत्कर्मिणो[illegible]र्थः । यद्यप्यग्निहोत्रस्य न दर्शपौर्णमासादि-
[illegible]ात् तथाऽपि नित्यनैमित्तिकं सकलं कर्मानु-
कर्मफलस्वर्गादिरागात्कः एव भगवता भाष्यकृता श्रुतिस्मृतिचोदितेषु
तेनाऽऽतुराः
तत्त्वज्ञानाभावादेव हेतोः ।

वानुमान्यामितिपदमानन्दाश्रमस्थमुण्डकोपनिषत्पुस्तके दृश्यते

कर्मसु एकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम् । अयथानुष्ठितस्याननुष्ठितसमत्वं चाभिधायेति नन्धार्थो विवृतः ॥ ३ ॥

काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥

देवी त्वेतद्विश्वरुच्या विशेषणमिति लेलायमानाः सप्त जिह्वा इत्यन्वयः ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु यथाकारं चाऽऽहुतयो ह्याददायन् ।

एतेषु दीप्यमानेष्वग्निजिह्वाभेदेषु विहितकालानतिलङ्घनेन होमद्रव्यं गृहीत्वा योऽग्निहोत्रादि कर्माऽऽचरति ।

तं नयन्त्येताः सूर्यस्य रश्मयो यत्र
देवानां पतिरेकोऽधिवासः ॥ ५ ॥

अधि वसतीत्यधिवासः । यस्मिन्सत्यलोके देवानां पतिरसमानो हिरण्यगर्भ आस्ते तत्र ता आहुतयः सूर्यस्य रश्मयो भूत्वा तं यजमानं प्रापयन्तीत्यर्थः ॥ ५ ॥

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

सूर्यस्य रश्मिसंपृक्ता अत एव सुवर्चस आहुतयस्तं यजमानमर्चयन्त्यः सुकृतसाध्यः पावन एष चतुर्मुखलोको भवदीय इतीदृशीं प्रियां वाचं वदन्त्य एह्येहीत्याह्वयन् ... प्रथममुण्डक प्रापयन्ति ॥ ६ ॥

एवं ब्रह्मलोकपर्यन्तसाधकान्यपि कर्माणि

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशो मित्यर्थः ।

षोडशर्त्विक्पत्नीयजमानरूपाष्टादशकर्त्राणि पश्यन् ।
संधिमत्तयाऽश्रेष्ठं कर्म येषु यजमानेषु वर्तते ते अग्निहोत्रकर्माणि दृष्टवन्तः ।

नौका इव संसारार्णवसंतरणासमर्था इत्यर्थः । यद्वा, अष्टादशस्मृत्युक्तं स्मार्तं कर्म येषु श्रौतकर्मसु तदधिकारसंपादकत्वेनावरमङ्गभूतं भवति तान्यपि श्रौतानि यज्ञात्मकानि कर्माणि शोकाम्बुतरणे साधनानि न भवन्तीत्यर्थः ।

एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरा-
मृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥

एतत्कर्म श्रेयःसाधनं मत्वा ये हृष्यन्ति ते जरामृत्युं च भूयो भूयो गच्छन्ति ॥ ७ ॥

अविद्यायामन्तरे वर्तमानाः स्वयं
धीराः पण्डितं मन्यमानाः ।

अविवेकप्रधानाः स्वयमेव धीमन्त ऊहापोहक्षमधीशालिन इति मन्यमानाः ।

जङ्घन्यमानाः परियन्ति मूढाः ॥

जरारोगाद्यनेकानर्थव्रातैर्भृशं हन्यमाना मूढाः परिभ्रमन्ति ।

अन्धेनेव नीयमाना यथाऽन्धाः ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

एतदेव विशदयति—

अविद्यायां बहुधा वर्तमानाः ॥

प्रकृतिमण्डले देवमनुष्यादिबहुविधाभिमानितया वर्तमाना अज्ञानिनः।

वयमेव कृतार्था इत्यभिमन्यन्ति बालाः ॥

वयमेव कृतार्था इत्यभिमानं कुर्वन्ति ।

यत्कर्मिणो न प्रवेदयन्ति रागात् ॥

कर्मफलस्वर्गादिरागात्कर्मठास्तत्त्वं यतो न जानन्ति ।

तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

तत्त्वज्ञानाभावादेव हेतोः क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यर्थः ॥ ९ ॥

इष्टापूर्तं मन्यमाना वरिष्ठम् ।

इष्टं यागादि पूर्तं खातादि । एतदेवाखिलपुरुषार्थसारं मन्यमानाः ।

नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।

श्रेयोन्तरं न जानन्तीत्यर्थः ।

नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं
हीनतरं वा विशन्ति ॥ १० ॥

ते सुकृतसाध्ये स्वर्गलोकोर्ध्वलोके कर्मफलमनुभूयेमं लोकं मनुष्यलोकं ततो हीनतरं वा नरकादिलक्षणं विशन्ति ॥ १० ॥

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता
विद्वांसो भैक्षचर्यं चरन्तः । सूर्य-
द्वारेण ते विरजाः प्रयान्ति यत्रा-
मृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

ये संन्यासिनः कृतश्रवणमनना वने स्थित्वोपरतकरणग्रामास्तपःशब्दितं ब्रह्म च तदादरातिशयरूपश्रद्धां च ये सेवन्ते ते विधूतपापाः सूर्यमण्डलं भित्त्वा 'सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते,' इति पर्यङ्कविद्याद्युक्तो हेयप्रत्यनीकः सदैकरूपरूपायेतिप्रमाणप्रतिपन्ननित्यविग्रहयुक्तः । यत्राऽऽस्ते तत्र यान्तीत्यर्थः । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' [ छा० ५।१०।१ ] इत्यत्र तपःशब्देन ब्रह्मोच्यते । बृहदारण्यके श्रद्धां सत्यमुपासत इति तपःशब्दस्थाने सत्यशब्दप्रयोगात्सत्यशब्दस्य ब्रह्मपरत्वादिति व्यासार्यैरुक्तत्वात् । तपःश्रद्धे इत्यत्र तपःशब्दो ब्रह्मपरः ॥ ११ ॥

विरक्तस्य परब्रह्मप्राप्तिसाधनज्ञानेच्छोर्गुरूपासनं विधीयते—

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो
निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्स-
मित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

तस्मै स विद्वानुपसन्नाय सम्य-
क्प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥ १३॥

इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके द्वितीयः
खण्डः समाप्तः॥ २॥

समाप्तं चेदं प्रथममुण्डकम्।

---

अस्मिन्वाक्ये न्यायसिद्धानुवादेन गुरूपसत्तिर्विधीयते। कर्मचितान्कर्मसंचितान्कर्मसंपाद्यांल्लोकान्परीक्ष्य मीमांसान्यायैर्निरूप्य ब्राह्मणोऽधीतसाङ्गसशिरस्को वेदो यु इत्यध्याहार्यं स इत्युत्तरत्र श्रवणात्। अकृतो नित्योऽत्र पुरुषो वि[शे]ष्यो लिङ्गवशात्। अक्षरपुरुषमित्यनन्तरोक्तेश्च। कृतेन कर्मणा नास्ति न सिध्यति तल्लभ्यते येनेति करणं द्रष्टव्यमिति यो निर्वेदमायात्स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्। एवकारेण नियमविधित्वमवगम्यते। समित्पाणिः। [illegible] रिक्तपाणिः। रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरुमिति हि यत्स्मर्यते। श्रोत्रियं श्रुतवेदान्तं ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवन्तं श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भावः। अभिगच्छेदित्यन्वयः। शमो बाह्येन्द्रियनियमनरूपः। प्रशान्तचित्तायेत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात्। एतेन श्रवणोपयुक्तमवधानं विवक्षितम्। ननूपासनोपयुक्तात्यन्तेन्द्रियजयादिः। तस्मै स विद्वान्प्रोवाचेत्यन्वयः। येनेति निर्देशो विज्ञानाभिप्रायः। तद्विज्ञानार्थमिति प्रकृतं सामान्यतः कारणाभिप्रायो वा लैङ्गव्यत्ययो वा। अक्षरं स्वरूपेणाविकारम्। सत्यं गुणतोऽप्यविकारम्। ताभ्यामचिज्जीवव्यावृत्तिः। तां ब्रह्मविद्यां प्रोवाच प्रकर्षादिनिर्देशः। इति वेदान्तसारे व्याख्यातम्। एतच्छ्रुत्यर्थं हृदि निधाय भगवता बादरायणेन शास्त्रारम्भे 'अथातो ब्रह्मजिज्ञासा' [ब्र०सू०१।१।१] इति सूत्रितम्। तस्य चायमर्थः—अथ षोडशलक्षणकर्मविचारानन्तरम्। अतः कर्मविचारात्कर्मणामल्पास्थिरत्वाधिगमसहितानन्तस्थिरफलापातप्रतीतेर्हेतोः

सत्त्वात् । ब्रह्मजिज्ञासा । ब्रह्मविचारः कर्तव्य इति । कर्मविचारे हि सति अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिभिरक्षय्यफलकत्वेन श्रुतानामपि चातुर्मास्यादीनां प्रत्यब्दं चातुर्मास्यैर्यजेतेत्यादिभिरावृत्तिविधानात् । ततोऽपि बहुवित्तव्ययायाससाध्याश्वमेधविश्वजिदादीनामननुष्ठानलक्षणाप्रामाण्यप्रसङ्गाच्च । चातुर्मास्यादीनामक्षय्यमापेक्षिकमिति निश्चित्यानन्तस्थिरफलरूपं ब्रह्म च वेदान्तवाक्यैरापाततोऽवगत्य तन्निर्णयाय ब्रह्मविचारे पुरुषः प्रवर्तत इति पर्यवसितोऽर्थः । ननु कर्मविचारे सत्यावृत्तिविधानादिभिः कर्मणामल्पास्थिरत्वं प्रतीयतां नाम वेदान्तवाक्यैरनन्तस्थिरफलं ब्रह्म कथं प्रतीयताम् । सिद्धे ब्रह्मणि व्युत्पत्तिविरहात् । व्यवहाराधीनत्वादाद्यव्युत्पत्तिग्रहस्य च व्यवहारस्य च कार्यान्वित एव संभवात् । तथा हि गामानयेति वाक्यश्रवणानन्तरं गवानयने प्रवृत्तं प्रयोज्यमुपलभ्य बालो व्युत्पित्सुरियं गवानयनप्रवृत्तिर्गवानयनकार्यताज्ञानसाध्या गवानयनप्रवृत्तित्वात् । मदीयगवानयनप्रवृत्तिवदिति तदीयकार्यताज्ञानमनुमाय तस्य च ज्ञानस्य शब्दान्वयव्यतिरेकानुविधायितया शब्दजन्यतां निश्चिनोति । यतश्च प्राथमिकव्युत्पत्तिग्रहे शब्दस्य कार्यताज्ञानजनकत्वनिश्चयादुपजीविद्वितीयादिव्युत्पत्तिग्रहोऽपि कार्यविषयक एवेति कार्यानन्विते सिद्धार्थे व्युत्पत्तिग्रहासंभवादव्युत्पन्नस्य शब्दस्यार्थप्रत्यायकत्वाभावात् । अनन्तास्थिरफलापातप्रतीत्यसंभवाद्ब्रह्मविचारो नाऽऽरभ्य इति पूर्वः पक्षः । अम्बातातादिभिश्चन्द्रादीनङ्गुल्या निर्दिश्यायं चन्द्रोऽयं गौरित्यादिशब्देषु बहुशः प्रयुक्तेषु भूयः सहचारदर्शी बालः शब्दप्रयोगे तदर्थबुद्ध्युत्पत्तिं स्वात्मनो दृष्ट्वा तयोः कंचिदौत्पत्तिकं संबन्धं निश्चिनोति । स एव शक्तिरिति गीयते । ततश्च सिद्धार्थेऽपि व्युत्पत्तिग्रहसंभवात्तान्त्रिकान्तरोपदर्शितमार्गैश्च सिद्धार्थे व्युत्पत्तिग्रहसंभवात् । अनन्तास्थिरफलापातप्रतीतिसंभवाद्ब्रह्मविचार आरम्भणीय इति सिद्धान्तः कृतः ॥ १२ ॥ १३ ॥

इत्यथर्ववेदीयमुण्डकोपनिषत्प्रकाशिकायां प्रथममुण्डके
द्वितीयः खण्डः समाप्तः ।

समाप्तं चेदं प्रथममुण्डकम् ।

---

तदेतत्सत्यम् ।

पूर्ववत् ।

यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।

अयोगोलकादिगताद्धन्यमानाद्वा वेश्मादिषु सुदीप्तात्पावकादनेकशः सरूपा विस्फुलिङ्गा यथोत्पद्यन्ते ।

तथाऽक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति ।

एवमेव सूक्ष्मचिदचिच्छरीरादक्षराद्ब्रह्मणस्तत्सरूपा नानाविधस्थूलरूपचिदचिद्रूपा भवन्तीति भावाः कार्यवर्गा उत्पद्यन्ते तत्रैव लीयन्ते च ।

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥१॥
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । [ श्वे० ३ । ९] इति द्युसंबन्धित्वलक्षणाद्दिव्यत्वेन तदपाणिपादम् [ श्वे० ३।९ ] । इति वा नित्यमिति वाऽमूर्तत्वेन 'तेनेदं पूर्णं पुरुषेण सर्वम्' [ श्वे० ३ । ९ ] इति बाह्याभ्यन्तरसर्ववस्त्वात्मतया, अचक्षुःश्रोत्रमित्यनिन्द्रियत्वेन प्राणमनःशून्यतया' 'येनाक्षरं पुरुषं वेद सत्यम' [ मु० १।२।१३ ] । इति विकाररूपदोषशून्यतया दिव्यादिशुभ्रपर्यन्तशब्दितश्च यः सोऽव्याकृतादक्षराद्यः परः समष्टिपुरुषस्तस्मादपि कारणत्वेन पर इत्यर्थः । प्रधानपुरुषयोस्तज्जन्यत्वादिति भावः । अक्षरात्परत इत्यत्राक्षरशब्दोऽश्नुत इति वा न क्षरतीति वा व्युत्पत्त्या स्वविकारव्यापकनामान्तराभिलापयोग्यक्षरणाभाववति अव्याकृते वर्तते । न तु भूतयोन्यक्षरे । भूतयोन्यक्षरस्य सबाह्याभ्यन्तर इत्यत्र तच्छब्दनिर्दिष्टस्य तस्मादेव परत्वासंभवात् । न हि तस्यैव ततः परतः परत्वं संभवति विरोधात् । न चाक्षरात्परत इति पञ्चम्योः सामानाधिकरण्यमेवास्तु इति वाच्यम् । अप्रतीतेः । ततश्च स्वविकारापेक्षया परभूतादव्याकृतादक्षरात्पर इत्येवास्तु न त्वव्याकृताक्षरात्परभूतात्समष्टिपुरुषात्पर इतीति

वाच्यम् । परशब्दस्य प्रतियोगिसापेक्षत्वेनाक्षरशब्दस्य परत्वावधिसमर्पकत्वस्यैव युक्तत्वात् । न हि देवतादुत्पन्नाद्भयमित्यत्र पञ्चम्योः सामानाधिकरण्यप्रतीतिरस्ति । अतो यथोक्त एवार्थः ॥ २ ॥

विश्वसृष्टिमेव प्रपञ्चयति—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

स्पष्टोऽर्थः ।

खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥ ३ ॥

खमाकाशः । ज्योतिस्तेजः । विश्वस्य कृत्स्नस्य धारिणी, एतत्पृथ्वीविशेषणम् । इदं हि वाक्यं प्राणपादे वियत्पादे विचिन्तितम् । प्राणपादे, 'असद्वा इदमग्र आसी॰' [ तै० २ । ७ । १ । ] 'तदाहुः— ऋषयो वाव तेऽग्र आसन् । के त ऋषयस्तदाहुः । प्राणा वा ऋषयः' [ बृ० २ । २ । ३ । ] इति । जगदुत्पत्तेः प्राक्प्राणशब्दितानामिन्द्रियाणां सद्भावश्रवणात् । प्राणोत्पत्तिवादिश्रुतयो जीवोत्पत्तिवादिश्रुतिवदन्यथा नेया इति पूर्वपक्षे प्राप्त तथा प्राणा वियदादिवत्प्राणशब्दवाच्यादिन्द्रियाण्युत्पद्यन्त एव । 'सदेव साम्यदमग्र आसीत्' [ छा० ६।२।१। ] आत्मा वा इदमेक एवाग्र आसीत्' [ ऐ० १ । १ ] इत्यादिषु प्राक्सृ॰ष्टेरेकत्वावधारणात् । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेतीन्द्रियाणामाहत्योत्पत्तिश्रवणाच्चोत्पद्यन्त एव । नचेन्द्रियोत्पत्तिवादो जीवोत्पत्तिवादवदन्यथा नेयो बाधकाभावात् । 'प्राणा वा ऋषयः' इत्यत्र प्राणशब्दस्य सार्वज्ञ्यवाचिऋषिशब्दसमानाधिकरणपरतया परमात्मवाचित्वेनेन्द्रियवाचित्वाभावात् । कथं तर्ह्येकस्मिन्परमात्मनि प्राणा वा ऋषय इति बहुवचनोपपत्तिरिति चेत्तत्राऽऽह—गौण्यसंभवात् । तत्प्राक्श्रुतेश्च बहुवचनश्रुतिर्गौणी । तत्र बहुत्वासंभवात्परमात्मन एव सृष्टेः प्रागवस्थानश्रवणात् । तस्यैव प्राणशब्देन प्रतिपादनीयत्वात् । 'तत्पूर्वकत्वाद्वाचः' । [ब्र०सू०२।४।४] वागिन्द्रियस्य वागिन्द्रियकार्याभिलपनकर्मभूतनामवाच्यवियदादिसृष्टिपूर्वकत्वात्प्रलये वागिन्द्रियादिकार्यशब्दाभिलापादिप्रयोजनाभावान्न प्रलये तेषामवस्थितिरिति स्थितम् । तथा तत्रैव पादे—आनीदवातं स्वधया तदेकमिति महाप्रलयसमये प्राणकार्यानिनश्रवणात् । एतस्माज्जायते प्राण इति मुख्यप्राणोत्पत्तिवादो जीवोत्पत्तिवादवन्नेतव्य इति शङ्कायां श्रेष्ठश्च श्रेष्ठप्राण इन्द्रियवदुत्पद्यते ।

आनीदवातमिति परब्रह्मणोऽनन्तं विद्यमानत्वमुच्यते न मुख्यप्राणस्य । अवातमिति वायुमात्रसत्तायास्तत्रैव प्रतिषिद्धत्वादिति स्थितम् । तथा वियत्पादे 'वायोरग्निः' । 'अग्नेरापः' । 'अद्भ्यः पृथिवी' [ तै० २।१ ] इत्यादौ वायुरूपाद्ब्रह्मणोऽग्निसृष्टिरुत केवलवायोरेवेति विषये, 'तेजोऽतस्तथा ह्याह' [ ब्र०सू० २।३।१० ]। अतः केवलवायोरेव तेज उत्पद्यते । वायोरग्निरिति हि श्रुतिराह । आपः । आपस्तेजस एवोत्पद्यन्ते । अग्नेराप इति हि श्रुतिराह । पृथिवी । पृथिव्यद्भ्य एवोत्पद्यते । अद्भ्यः पृथिवी । ता अन्नमसृजन्तेति हि श्रुतिराह । ननु कथमन्नशब्देन पृथिव्यभिधीयते तत्राऽऽह अधिकाररूपशब्दान्तरेभ्यो महाभूतसृष्ट्यधिकारात्पृथिव्येवान्नकारणभूताऽन्नशब्देनोपचारादुच्यते । तथा 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' [ छा० ६।४।१ ] इतिकृष्णरूपस्यान्नसंबन्धितया कीर्तनान्न मुख्यमन्नमन्नशब्देनोच्यते । अपि तु पृथिव्येव । तैत्तिरीयके—'अद्भ्यः पृथिवी' इति पृथिवीवाचकाविस्पष्टशब्दान्तरश्रवणाच्चान्नशब्देन पृथिव्येवोच्यते । ततश्च केवलवाय्वादेरेवाग्न्याद्युत्पत्तिर्न तु तच्छरीरकब्रह्मण इति पूर्वपक्षे प्राप्ते तदभिध्यानादेव तु तल्लिङ्गात्सः । तु शब्दः पक्षव्यावर्तकः । वाय्वग्न्यादिशब्देन स परमात्मैवाभिधीयते 'तत्तेज ऐक्षत ता आप ऐक्षन्त' इति तत्तत्कार्यसृष्टिसंकल्पलक्षणाभिध्यानरूपात्परमात्मलिङ्गादचेतने तेजआदौ ईक्षणासंभवात् । 'विपर्ययेण तु क्रमोऽत उपपद्यते' [ ब्र० सू० २।३।१४ ]। तुशब्दोऽवधारणे । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्येवं सर्वेषां भूतानां परब्रह्मानन्तर्यरूपो वायोरग्निरग्नेराप इत्युक्तक्रमविपर्ययेण श्रूयमाणो यः क्रमः स वाय्वादिशरीरकपरमात्मोपादानकत्व एवोपपद्यते न केवलवाय्वाद्युपादानकत्व इत्यर्थः । 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्' [ ब्र० सू० २।३।१५ ] विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यते । नन्वेतस्माज्जायत इति वाक्यं प्राणादीनां सर्वेषामव्यवहितब्रह्मोपादानकत्वं प्रतिपादयितुं न प्रवृत्तं किंतु प्राणोत्पत्त्यनन्तरं मनसश्च सर्वेन्द्रियाणां चोत्पत्तिः । तत आकाशादिभूतानामुत्पत्तिरितीन्द्रियाणां मनसश्च प्राणभूतान्तरालसंभूतत्वप्रतिपादनार्थं प्रवृत्तम् । श्रुत्यन्तरसिद्धमहाभूतसृष्टिक्रमप्रत्यभिज्ञानरूपाल्लिङ्गादिति चेन्न । अविशेषात् । अविशेषेण प्राणादीनां सर्वेषां ब्रह्मानन्तर्यरूपक्रमप्रतीतेस्तत्परित्यागे

कारणाभावात् । ननु वाय्वादिशरीरकब्रह्मणोऽग्न्याद्युत्पत्तौ वाय्वादिशब्दानां तच्छरीरकब्रह्मणि लक्षणा स्यात्तत्राऽऽह—चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् । तुशब्दः शङ्कानिवृत्त्यर्थः । चराचरव्यपाश्रयो देवमनुष्यवृक्षादिशब्दव्यपदेशो भाक्तः । वाच्यैकदेशे भज्यत इत्यर्थः । भक्त्या प्रयुक्तो भाक्तः । भक्तिर्भङ्गः । विशिष्टवाची शब्दो विशेषणमात्रे भङ्क्त्वा प्रयुज्यते । वाच्यैकदेशे प्रयोगाद्भज्यत इत्यर्थः । वचसां वाच्यमुत्तममित्यादिप्रमाणानुसारात्सर्वेषां चराचरशब्दानां विशिष्टं ब्रह्मैवार्थः । विशेषणमात्रप्रयोगस्तु अमुख्यः । ततश्च वाय्वादिशब्दैर्ब्रह्माभिधानं मुख्यमेव । यद्वा, अभाक्त इति च्छेदः । चराचरवाचिशब्दैर्ब्रह्मव्यपदेशोऽभाक्तो मुख्य इति यावत् । शरीरवाचिशब्दानां शरीरिपर्यन्तत्वादिति स्थितम् ॥ ३ ॥

प्रकृतमनुसरामः—

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥

अमुं मन्त्रं प्रस्तुत्य स्मर्यमाणमनुमानं स्यादित्यत्राग्निरिह द्युलोकः । 'असौ वै लोकोऽग्निः' [ बृ० ६।२।९ ] इति श्रुतेः । स्मरन्ति च मुनयः ।

द्यां मूर्धानं यस्य विप्रा वदन्ति
खं वै नाभिश्चन्द्रसूर्यौ च नेत्रे ।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च
सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥

इति भाषितम् । वाग्विवृता वागिन्द्रियव्यापारा एव वेदाः । वायुः प्राणः । महावायुरेव देहाधारकः प्राणः । जगत्सर्वमस्य देहान्तर्वर्तिहृदयाख्यमांसविशेषः । पद्भ्यां पृथिवी पादावेव पृथिवीत्यर्थः । प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया । सर्वभूतानां तच्छरीरकत्वात्सर्वेषामन्तरात्मेत्यर्थः ॥ ४ ॥

तस्मादग्निः समिधो यस्य सूर्यः ॥

तस्मादक्षरात् । अग्निर्मूर्धेत्यत्राग्निशब्दनिर्दिष्टो द्युलोको यस्याग्निः

सूर्यः समिध इन्धनानि । 'असौ वै लोकोऽग्निर्गौतम तस्याऽऽदित्य एव समित्' [ बृ० ६।२।९ ] इतिपञ्चाग्निविद्यायां श्रवणात् ।

सोमात्पर्जन्य ओषधयः पृथिव्याम् ।

अतो हि द्युलोकाग्नेर्निष्पन्नात्सोमात्पर्जन्योऽग्निर्द्वितीयः संभवति । तस्मात्पर्जन्यादोषधयः पृथिव्यामग्नौ संभवन्ति ।

पुमान्रेतः सिञ्चति योषितायाम् ।

ओषधीभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्यः पुरुषरूपोऽग्निर्योषिद्रूपाग्नौ रेतःसेकं करोति ।

बह्वयः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥

एवं पञ्चाग्निविद्योक्तक्रमेण बह्वयः प्रजाः परस्मात्पुरुषात्संप्रसूताः॥५॥

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो
दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः ।

तस्मादक्षरपुरुषादृग्यजुःसामवेदा अग्निहोत्राद्या यज्ञाः सोमविकाराः क्रतवश्च दक्षिणाश्च संवत्सराद्याः काला यजमानः कर्मफलभूताः स्वर्गाद्या लोकाश्चोत्पन्ना इत्यर्थः ।

सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

ये लोकाश्चन्द्रसूर्यकिरणपूता भवन्ति ॥ ६ ॥

तस्माच्च देवा बहुधा संप्रसूताः
साध्या मनुष्याः पशवो वयांसि ॥

बहुधा कर्मजानजादिभेदाच्च बहुधेत्यर्थः । वयांसि पक्षिणः शिष्टं स्पष्टम् ।

प्राणापानौ व्रीहियवौ तपश्च श्रद्धा
सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

यवो दीर्घशूकधान्यविशेषः । व्रीहियवशब्दौ धान्यमात्रोपलक्षकौ । तपः कृच्छ्रादिलक्षणम् । श्रद्धाऽऽस्तिक्यबुद्धिः । सत्यं सत्यवचनम् । ब्रह्मचर्यं स्त्रीसङ्गादिराहित्यम् । विधीयत इति विधिः । नित्यनैमित्तिकादिः ॥ ७ ॥

सप्त प्राणाः प्रभवन्ति तस्मात् ।

तस्मादक्षराच्छीर्षण्यानि चक्षुःश्रोत्रनासिकारन्ध्रयुग्मास्यसंचारीणि सप्तेन्द्रियाणि उत्पद्यन्ते ।

सप्तार्चिषः समिधः सप्त जिह्वाः ।

गार्हपत्याद्या अग्नयः । इन्धनानि । [ काली ] प्रभृतयः सप्त जिह्वाश्च प्रभवन्तीति पूर्वेणान्वयः ।

सप्त इमे लोका येषु चरन्ति प्राणा
गुहाशया निहिताः सप्त सप्त ॥८॥

इमे सप्तापि लोका उत्पन्नाः । येषु लोकेषु हृदयगुहायां सुषुप्तिवेलायां शयानाः सप्त प्राणाश्चक्षुरादिगोलकप्रदेशेषु धात्रा विहिताः संचरन्तीत्यर्थः । सप्त सप्तेतिवीप्सा पुरुषभेदाभिप्राया ॥ ८ ॥

अतः समुद्रा गिरयश्च सर्वे ।

स्पष्टोऽर्थः ।

अस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ॥

बहुरूपा गङ्गाद्याः सरित इत्यर्थः ।

अतश्च सर्वा ओषधयो रसाश्च ।

स्पष्टोऽर्थः । ननु पृथिव्या एवौषधयो जायमाना दृश्यन्त इक्ष्वादिभ्यो रसा जायमाना दृश्यन्ते कथमक्षरात्सर्वं जायत इत्युच्यत इत्याशङ्क्याऽऽह—

येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

यस्मात्कारणादेषोऽक्षरपुरुषः सर्वैर्भूतैः परिवृतः सन्मदन्तरात्मतया वर्तते तस्मात्पृथिव्यादिभ्यो जायमाना अपि अक्षराद्ब्रह्मणो जाता इति शक्यते वक्तुमिति भावः ॥ ९ ॥

पुरुष एवेदं विश्वम् ।

यस्मादसौ सर्वभूतान्तरात्मा तस्मात्सर्वमिदं पुरुषोपादानकत्वात्पुरुष एव तस्मात्तद्विज्ञाने सर्वस्यापि ज्ञानमुत्पद्यत इति भावः ।

कर्म तपो ब्रह्म परामृतम्।

तस्य जगत्सृष्ट्यनुकूलः कर्मशब्दितो व्यापारः। स्रष्टव्यालोचनात्मकं तपः। एको व्यापी सदा शुद्धो निर्गुणः प्रकृतेः पर इति ब्रह्मशब्दितप्रकृतिपरभूतमुक्तात्मनाममृतवत्परमानन्दतया भोग्यभूतं ब्रह्माप्यक्षरपुरुष एवेत्यर्थः।

एतद्यो वेद निहितं गुहायां सोऽवि-
द्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डके
प्रथमः खण्डः ॥ १ ॥

---

हे सोमार्ह हृदय गुहावर्त्येतदक्षरं ब्रह्मेह लोके यो वेद स ग्रन्थिवद्दुर्मोचामविद्यां विकिरति निरस्यति कॄ विक्षेप इति धातुः ॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके
प्रथमः खण्डः ॥ १ ॥

---

आविः संनिहितं गुहाचरं नाम महत्पदम् ॥

आविरित्यव्ययं योगिनामपरोक्षम्। संनिहितं गुहाचरं दुर्विज्ञेयस्वरूपतया प्रसिद्धं सर्वतो महत्पदं प्राप्यभूतमित्यर्थः।

अत्रैतत्सर्वमर्पितम्। एजत्प्राणन्निमिषच्च यत् ॥

एजत्कम्पमानं जाग्रदिति यावत्। प्राणभृत्। निमिषत्सुप्तं जाग्रत्सुप्तादिभेदभिन्नप्राणिजातमत्राक्षरपुरुषेऽर्पितमित्यर्थः।

एतज्जानथ सदसद्वरेण्यम् ॥

स्थूलसूक्ष्मवस्तुभिराधारत्वेन प्रार्थनीयमाधारभूतमिति यावत्। तादृशमेव ब्रह्मावगच्छतेत्यर्थः।

परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥

'यो विज्ञाने तिष्ठन्' [बृ० ३।७।२२] इतिश्रुतेर्विज्ञानशब्दो जीवपरः।

विज्ञानात्परं जीवादधिकं प्रजानामुपायोपेयत्वं नात्यन्तवरणीयमत्यन्तप्रार्थनीयमित्यर्थः ॥ १ ॥

यदर्चिमयदणुभ्योऽणु च ।

यदर्चिमत् । अर्चिश्शब्दितदीप्तिमत्त्वं च विग्रहद्वारा द्रष्टव्यम् । अणुभ्योऽपि श्यामाकादिभ्योऽणिष्ठम् । सूक्ष्मतया सर्वान्तःप्रवेशयोग्यमित्यर्थः ।

यस्मिँल्लोका निहिता लोकिनश्च ।

लोकिनो लोकवासिनः । शिष्टं स्पष्टम् ।

तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।

उशब्दोऽवधारणे प्राणादिकमपि तदात्मकमित्यर्थः ।

तदेतत्सत्यममृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

तदेतदक्षरमविनाशि अमृतमसंसारिभोग्यमिति वाऽर्थः । तदेव मनसा वेद्धव्यं विद्धि । समाहितमनोविषयं विद्धि तत्र मनःसमाधानं कुर्विति यावत् ॥ २ ॥

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संदधीत ।

उपनिषत्प्रसिद्धं प्रणवाख्यं धनुर्गृहीत्वा भगवदुपासनया स्थूलसूक्ष्मशरीराद्विवेचितमष्टाक्षरादिलक्षणमहास्त्रसंयोजितमात्मलक्षणं शरं संदध्यात् ।

किं कृत्वेत्यत्राऽऽह—

आयम्य तद्भावगतेन चेतसा ।

भगवत्प्रवणेन चेतसा तद्धनुरायम्य प्रणवाख्यस्य धनुष आयमनं नाम प्रत्यक्परमात्मनोः शेषशेषिभावलक्षणार्थप्रकाशकत्वेनानुसंहितत्वम् । तद्भावगतेन चेतसेति पाठे भावः प्राप्तिस्तद्भावगतेन चेतसा तत्प्राप्तीच्छया शरमायम्येत्यर्थः । तस्य चाऽऽयमनं नाम मनसेन्द्रियान्तःकरणस्य तस्य विषयान्तरविमुखीकरणपूर्वकमक्षराख्यलक्ष्याभिमुखतयाऽवस्थापनम् ॥

लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥

हे सोम्य तदेवाक्षरं लक्ष्यं लभ्यं जानीहीत्यर्थः ॥ ३ ॥

---

आनन्दाश्रमस्थपुस्तके— १ तदमृतं । २ संधयीत ।

उक्तमर्थं विवृणोति—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।

ओमित्यात्मानं युञ्जीतेत्यात्मरूपशरसमर्पणे हेतुत्वात्प्रणवस्य धनुष्ट्वेन रूपणम् ।

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

विषयान्तरविमुखेनैकाग्रचित्तेन वेद्धव्यम् । वेधो हि तदेकशेषत्वेन तद्ध्यानम् । यथा लक्ष्ये निमग्नस्य शरस्य लक्ष्यापेक्षया भेदकाकारा-स्फुरणमेवं परमात्मनि प्रणवेन समर्पितस्य प्रत्यगात्मनस्तत्साम्यलक्षणां मुक्तिमापन्नस्य ज्ञानैकाकारस्य देवमनुष्यत्वादिलक्षणभेदकाकारास्फू-र्तिरेव तन्मयत्वमिति द्रष्टव्यम् ।

यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः
सह प्राणैश्च सर्वैः । तमेवैकं जानथाऽऽत्मा-
नमन्या वाचो विमुञ्चथामृतस्यैष सेतुः॥५॥

यस्मिन्नक्षरे द्युपृथिव्यन्तरिक्षमनःप्राणादिकं समवेतं तमेकमेव स्वेत-रसमस्तवस्तुनियन्तृत्वेन व्यापकतया जानीतानात्मविषया वाचस्त्यजत कस्य हेतोः । अमृतस्यैष सेतुर्नद्यादिषु हि सेतुर्हि कूलस्य प्रतिल-म्भकः संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः ॥ ५ ॥

अरा इव रथनाभौ संहता यत्र नाड्यः
स एषोऽन्तश्चरते बहुधा जायमानः ।
ओमित्येवं ध्यायथाऽऽत्मानं स्वस्ति वः
पाराय तमसः परस्तात् ॥ ६ ॥

संततं शिराभिस्तु लम्बत्याकोशसंनिभमित्युक्तरीत्या यत्र हृदये रथ-नाभौ समर्पिता अरा इव नाड्यः संहताः संगतास्तत्र मध्ये स एष प्रकृत आत्मा, अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिमिति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयस्वरूपसंस्थानगुण-कर्मसमन्वितः स्वीयस्वभावमजहदेव स्वेच्छया बहुधा जायमानः संच-

---

आनन्दाश्रमस्थपुस्तके—१ °ष आत्मा । २ °थ आत्मा । ३ पराय ।

रते वर्तत इत्यर्थः । तमसः परस्ताद्वर्तमानाय वः पाराय पारतीराय पारावारे परार्वाची तीर इति नैघण्टुकाः प्राप्यभूतायेति यावत् । तत्प्राप्तय ओमित्यात्मानं ध्यायथेत्यन्वयः । एवं ध्यानाय प्रवृत्तेभ्यो युष्मभ्यं स्वस्ति भवतु ॥

यः सर्वज्ञः सर्ववित् ।

उक्तोऽर्थः ।

यस्यैष महिमा भुवि ।

भूलोके संसारतन्त्रप्रवर्तनरूप एष महिमा यदीयः ।

दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ।

यस्यैष महिमा भुवीति लीलाविभूत्यन्वय उक्तः । दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्तेति व्यासार्यैरुक्तत्वात् । वैकुण्ठाख्ये ब्रह्मपुरे परमे व्योम्नि अयमात्मा प्रतिष्ठित इत्यर्थः ।

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं संनिधाय ।

विशुद्धमनोग्राह्यः । प्राणशरीरनेता । प्राणं च शरीरं च तस्य नेता जीवस्य प्राणशरीरलम्भक इत्यर्थः । यद्वा 'मनोमयः प्राणशरीरो भारूपः' [ छा० ३।१४।२ ] इतिश्रुतेः प्राणः शरीरमस्य प्राणशरीरकः सचासौ नेता च प्रभुरित्यर्थः । अधिभूर्नायको नेता प्रभुरिति हि नैघण्टुकाः । अन्नेऽन्नपरिणामे शरीरे प्रतिष्ठितो यस्तस्मिंश्चित्तं हृदयं संनिधाय ।

तद्विज्ञानेन परिपश्यन्ति धीरा
आनन्दरूपममृतं यद्विभाति ॥७॥

अमृतं यत् । अस्पष्टसंसारगन्धमानन्दरूपं यद्विभाति तद्ब्रह्म विज्ञानशब्दितेन दर्शनसमानाकारेणोपासनेन धीराः प्रज्ञाशालिनः परिपश्यन्ति साक्षात्कुर्वन्तीत्यर्थः ॥ ७ ॥

तस्य फलमाह—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसं-
शयाः । क्षीयन्ते चास्य कर्माणि ।

हृदयस्यान्तःकरणस्य ग्रन्थयो ग्रन्थिवद्दुर्मोचा रागद्वेषादयः ।

हृत्स्थानमयत इति व्युत्पत्त्या हृदयशब्देन जीवो वा। ब्रह्मज्ञानेन सार्वज्ञ्ये सिद्धे सर्वविषयकाः संशया नश्यन्ति। अस्य च प्रारब्धव्यतिरिक्तानि पूर्वाण्यनेकभवार्जितानि कर्माणि च नश्यन्ति। नाशो नाम कर्मणां फलजननशक्तिविनाशः। 'तदधिगम उत्तरपूर्वाघयोः' [ब्र०सू०४।१।१३] इति सूत्रेऽघस्य विनाशकरणमुत्पन्नायास्तच्छक्तेर्विनाशकरणं शक्तिर्हि परमपुरुषाप्रीतिरेवेति भाषितम्। एतत्सर्वं कदेत्यत्राऽऽह—

तस्मिन्दृष्टे परावरे ॥ ८ ॥

परेऽवरे यस्मात्स परावरः। सर्वोत्कृष्टा अपि ब्रह्मादयो यस्मान्निकृष्टा इत्यर्थः। अथवा परावरे परावरशरीरके सर्वात्मभूत इत्यर्थः। तादृशे तस्मिन्दर्शनसमानाकारज्ञानविषयीकृत इत्यर्थः। न च 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' [ छा०८।१३।१ ] इति शरीरवियोगकाल एव पुण्यपापाख्यकर्मविनाशस्य श्रुतत्वात्। 'सांपराये तर्तव्याभावात्।' [ब्र० सू० ३।३।२७ ] इति सूत्रतद्भाष्ययोरपि तथैव प्रतिपादनात्। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्ट इति दर्शनसमानाकारज्ञानारम्भसमय एव श्रूयमाणः कर्मक्षयः कथमुपपद्यतामिति वाच्यम्। अस्मिन्वाक्ये श्रूयमाणः कर्मक्षयो दर्शनसमानाकारोपासनारम्भप्रीतस्य परमात्मनस्तत्संप्राप्तावुपासकस्याघं क्षपयिष्य इति संकल्परूपः। देहवियोगसमयभावी कर्मक्षयस्तु क्षान्तमिति संकल्परूप इत्यविरोधो द्रष्टव्यः ॥ ८ ॥

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।

तस्यां हिरण्मयः कोश इतिश्रुत्युक्तरीत्या स्वप्रकाशतया कमनीयतया वा हिरण्मयशब्दाभिलप्येऽत्युत्कृष्टपदार्थोपलब्धिस्थानतया कोशतुल्ये पर उत्कृष्टे परमपदे पुर इति पाठेऽपि स्पष्टोऽर्थः। विरजं छान्दसमदन्तत्वम्। सत्त्वरजस्तमोतीतं निष्कलं निरवयवमित्यर्थः।

तच्छुभ्रं ज्योतिषां ज्योतिः।

शुभ्रमनवद्यं प्रकाशकानामपीन्द्रियाणां प्रकाशकम्। ज्योतिःशब्दितदीप्तियोगो विग्रहद्वारको द्रष्टव्यः।

तद्यदात्मविदो विदुः ॥ ९ ॥

आत्मविदो यद्विदुर्यदात्मतत्त्वमिति यावत् ॥ ९ ॥

ज्योतिषां ज्योतिष्ट्वं प्रपञ्चयति—

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।

तस्मिन्दीप्यमाने नैतेषां दीप्तिरस्तीत्यर्थः । नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने तद्भासा च जगति भासमाने न तत्र सूर्यो भातीति प्रत्यक्षविरुद्धं कथमभिधीयत इत्यत्राऽऽह—

तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१०॥

इदं च जगद्भासकमादित्यादीनां परिदृश्यमानं रूपं न नैजं किंतु परमात्मदत्तं तदीयमेव तेजः । गीतं च भगवता—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥
[ गी० १५।१२ ]

इति । विवृतं चैतद्भगवता भाष्यकृता—अखिलजगतो भासकमेतेषामादित्यादीनां यत्तेजस्तन्मदीयं तेजस्तैराराधितेन मया दत्तमिति विद्धीति । अतो याचितकमण्डितपुरुषतुल्यानामेतेषां भास्वररूपशालिनामपि अनन्याधीनतेजस्त्वाभावान्न भातीतिव्यपदेशो युज्यत इति भावः । तस्य भासा सर्वमिदं विभाति । सर्वप्रपञ्चभासकस्यापि सौर्यादितेजसस्तद्दत्तत्वेन तदीयत्वाभावादिति भावः । अत्र वक्तव्यं सर्वं कठवल्लीविवरण उक्तं तत्रैव द्रष्टव्यम् ॥ १० ॥

उपसंहरति—

ब्रह्मैवेदममृतं पुरस्तात्पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।

सर्वासु दिक्षु यदिदं दृश्यते तत्सर्वं ब्रह्मैवेत्यर्थः ।

अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥

इत्यथर्ववेदीयमुण्डकोपनिषदि द्वितीयमुण्डके
द्वितीयः खण्डः ॥ २ ॥

---

वरणीयतमं ब्रह्मैवेत्यर्थः। शिष्टं स्पष्टम्॥ ११॥

इत्यथर्ववेदीयमुण्डकोपनिषद्भाष्ये द्वितीयमुण्डके
द्वितीयः खण्डः॥ २॥

---

समाप्तं चेदं द्वितीयं मुण्डकम्।

---

नन्वेकस्यैव ब्रह्मणः सर्वदेहानुप्रवेशे तस्य सुखदुःखभोक्तृत्वप्रसङ्ग इत्यत्राऽऽह—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।

युज्यत इति युक्शब्दो गुणपरः। समानगुणकः रूगुगिति व्यासार्यैर्विवृतत्वात्। सयुजौ समानगुणकौ सखाया अपहतपाप्मत्वादिगुणैः परस्परसमानौ द्वौ सुपर्णौ द्वौ पक्षिसदृशौ समानमेकं वृक्षं वृक्षवच्छेदनार्हं शरीरं समाश्रितावित्यर्थः।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥१॥

तयोर्मध्येऽन्यतरो जीवः स्वादु परिपक्वं पिप्पलं कर्मफलं भुङ्क्ते। अन्यस्तु परमात्माऽभुञ्जान एव प्रकाशते। अत्र शरीरे तदाश्रयजीवपरादिविषयवाचकशब्दानिगरणेन विषयिवाचकवृक्षसुपर्णादिशब्दैर्वृक्षत्वाध्यवसानलक्षणरूपकातिशयोक्तिर्विच्छित्तिविशेषायेति द्रष्टव्यम्॥ १॥

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।

अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः। पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ देहयोगाद्वा सोऽपीत्युक्तन्यायेन तिरोहितपरमात्मशेषत्वज्ञानानन्दलक्षणस्वस्वरूपः सन्वृक्षवच्छेदनार्हे एकस्मिञ्छरीरे जीवः स्थूलोऽहं कृशोऽहमित्यादितादात्म्यबुद्ध्या पांसूदकवत्तदेकतामापन्नः संस्तत्संसर्गकृतानि दुःखान्यनुभवतीत्यर्थः।

जुष्टं यदा पश्यत्यन्यमीशमस्य
महिमानमिति वीतशोकः॥ २॥

इतिशब्दो बुद्धिस्थप्रकारवचनः। चशब्दश्चाध्याहर्तव्यः। यदाऽसौ जीवो निमग्नात्स्वस्माद्धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं स्वकर्मभिः प्रीतं परमात्मानमखिलजगदीशनलक्षणमस्य महिमानं च यदा

पश्यति तदा वीतशोको भवतीत्यर्थः । केचित्त्वनीशयाऽनीशत्वेनास-र्मर्थत्वेनेत्यर्थः । लोके हि पङ्कादौ निमग्नः पङ्कादिसंबन्धेन मुह्यमानः स्वयं निर्गमनासमर्थत्वेन शोचन्स्वोद्धरणसमर्थं स्वयं पङ्कादावनिमग्नं च स्वस्मिन्प्रीतिमत्त्वेन सुहृद्भूतं तस्योद्धरणसामर्थ्यं च दृष्ट्वा वीतशोको भवति तत्समाधिरत्रानुसंधेयः । नचास्मिन्पक्षेऽनीशया भोग्यभूतया प्रकृत्येति भाष्यविरोधः शङ्कनीयः । भोग्यभूतयेत्यस्यानीशयेत्येतद्विवरणरूपत्वाभावात् । तस्य सामर्थ्यलब्धार्थानुवादरूपत्वादिति वदन्ति । ननु कथं द्वा सुपर्णेति मन्त्रस्य जीवपरमात्मभेदपरत्वम् । अन्तःकरणजीवपरो ह्ययं मन्त्रः । पैङ्गिरहस्यब्राह्मणेऽस्य मन्त्रस्य तथा व्याख्यातत्वात् । तथा हि तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्न्योऽभिचाकशीति 'ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इत्यत्र स्वाद्वत्तीत्येतदन्तस्य वाक्यस्य सत्त्वपरत्वमनश्नन्नित्यादेः क्षेत्रज्ञपरत्वं च प्रतीयते । न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरमात्मपराविति वाच्यं तयोः शब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात् । तदेतत्सत्त्वं येन स्वप्नं पश्यति । 'अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवशब्दाभ्यां श्रुत्यैव व्याख्यातत्वाच्च । येन पश्यतीति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणं स्वप्नद्रष्टृत्वाच्च क्षेत्रज्ञो हि जीवः । अतोऽयं मन्त्रोऽन्तःकरणजीवपर इति चेत् । न तावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापि वदितुं शक्यते । अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने 'समाने वृक्षे पुरुषो निमग्नः' इत्यनन्तरे मन्त्रे जीवपरयोः प्रतिपन्नत्वात् । अस्य मन्त्रस्य 'तदैकार्थ्याच्च' समानं वृक्षं परिषस्वजाते समाने वृक्षे पुरुषो निमग्न इति तयोरैकार्थ्यं हि प्रतीयते । समाने वृक्ष इति मन्त्रे च पुरुषो जीवः । अन्तःकरणस्य पुरुषशब्दवाचित्वाभावात् । शोचति मुह्यमानः पश्यति वीतशोक इति पदानामस्वारस्यप्रसङ्गाच्च । अन्यश्च परमात्मेशशब्दोक्तत्वात्स्वविषयकज्ञानेन वीतशोकहेतुत्वाच्च न केवलमनन्तरमन्त्रैकार्थ्याद्द्वा सुपर्णेति मन्त्रस्य परमात्मपरत्वं किंतु स्ववाक्ये स्वाद्वत्त्यनश्नन्नन्य इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते । चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवदन्तःकरणस्यापि करणत्वादेव हि भोक्तृत्वं हि न संभवति जीवस्य वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेवानश्नत्वमपि नोपपद्यते । तर्हि पैङ्गिश्रुतेः कोऽर्थः । उच्यते- सत्त्वं बद्धजीवः । द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु इति नामानुशासनाज्जन्तुपर-

त्वावगतेः । जन्तुश्च चेतनः । प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिण इति नामपाठात् । वन्यान्विनेष्यन्निव दुष्टसत्त्वानिति प्रयोगात् ।

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ इति दर्शनाच्च ।

क्षेत्रज्ञशब्दश्चात्र परमात्मपरः । अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः । क्षेत्रज्ञोऽक्षर एव चेति परमात्मनि प्रयोगात् । क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च । मोक्षधर्मे—

ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः । इति । तत्रैव—
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥
क्षेत्राणि च शरीराणि ज्ञानानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥

इति प्रयोगात् । तत्रैव कपिलासुरिसंवादे—ज्ञातानामासुरे श्रेष्ठो ज्ञो द्रष्टा शुचिरुपेक्षकः । ज्ञातृको बुद्ध्यमानाप्रतिबुद्धयोः । परममृतं विदित्वा निरवयवमनामयमस्माद्दुःखाद्विमुच्यत एवेति बुद्ध्यमानाप्रतिबुद्धशब्दाभिहितयोश्चिदचितोः परस्य क्षेत्रज्ञशब्देनाभिधानात्तत्रैव पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा, एतस्माद्वर्गादपवृत्तोऽपवर्गः क्षेत्रज्ञः शुचिरुपेक्षको बुद्ध्यमानाप्रतिबुद्धयोः परस्मादिति, तत्रैव—अन्यदुदकमन्यत्पुष्करवर्णम् । तथाऽन्यत्क्षेत्रमन्यः पुरुषः पञ्चविंशकोऽन्यश्चास्मात्क्षेत्रज्ञ इति । पुनश्च तत्रैव । एवमासुरेऽन्यद्द्रव्यमन्यः पुरुषः पञ्चविंशतितत्त्वमन्योऽस्मात्क्षेत्रज्ञ इति पञ्चविंशात्परस्मिन्क्षेत्रज्ञशब्दप्रयोगात् । सनत्कुमारनारदसंवादे च—

पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति ।
पश्यन्तं पश्य पश्यत्वात्पश्यात्पश्येन पश्यते ॥

इति श्लोकमुक्त्वा प्रकृतिं क्षेत्रं क्षेत्रज्ञं चापरः क्षेत्रज्ञः षड्विंशकोऽनुपश्यति न तु पञ्चविंशकः क्षेत्रज्ञः प्रकृतिर्वाऽपरं क्षेत्रज्ञं पश्यतीति प्रयोगाच्च । अत्र ह्यात्मशब्दवत्क्षेत्रज्ञशब्दस्य जीवपरसाधारणस्य पञ्च-

विंशपरशब्दविशेषितस्य जीवपरमात्मविषयत्वदर्शनाच्च।

योऽस्याऽऽत्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मेति चोच्यते ।

इति मानवप्रयोगाच्च । येन स्वप्नं पश्यतीत्यत्रेत्थंभावे तृतीया येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते । ततश्च काठिन्यवान्यो बिभर्तीति पृथिवीद्वारा काठिन्यवत्स्वप्नद्रष्टृत्वम् । जीवद्वारा परमात्मविशेषणं भवतीति न विरोधः । शारीरकशब्दश्च तस्यैष एव शारीर आत्मेतिवत्स्वव्यतिरिक्तसमस्तचिदचिच्छरीरके परमात्मन्युपपद्यते । उपद्रष्टेति निरुपाधिकं द्रष्टृत्वं तस्यैवोपपद्यते । एवं शारीर उपद्रष्टेति पदद्वयेन परस्य क्षेत्रज्ञशब्दवाच्यत्वमुपपादितं भवति । अतो द्वा सुपर्णेति मन्त्रो जीवपरमात्मपरः । किं च 'इयदामननात्' इत्यधिकरणे 'द्वासुपर्णा' इति मन्त्रे भोक्त्रभोक्त्रोः प्रतिपाद्यता । 'ऋतं पिबन्तौ' इत्यत्र तु भोक्त्रोरेव प्रतिपाद्यता, पिबन्ताविति श्रवणात् । न च पिबन्तावित्येतच्छत्रिन्यायेन पिबदपिबत्समुदायलक्षकमिति वाच्यम् । मुख्यार्थपरित्यागे कारणाभावादिति पूर्वपक्षं कृत्वा 'ऋतं पिबन्तौ' 'द्वा सुपर्णा' इत्यत्र च द्वित्वसंख्याप्रतीतिरेवयं प्रतीयते । तत्र च द्वा सुपर्णेति मन्त्र 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यः' इति अशनायाद्यतीतः परमात्मा प्रतीयते । अत एव 'जुष्टं यदा पश्यत्यन्यमीशम्' इति वाक्यशेषे परमात्मन एव प्रतिपादनं दृश्यते । ऋतं पिबन्ताविति मन्त्रे च, अन्यत्र धर्मादित्युपक्रमेण परमात्मनः प्रकृतत्वात् । यः सेतुरीजानानामक्षरं ब्रह्म यत्परमिति परमात्मविषयवाक्यशेषाच्च परमात्मैव प्रतिपाद्यः । अत ऋतं पिबन्तावित्येतच्छत्रिन्यायेन योज्यम् । अतो वेद्याभेदाद्विद्याभेद इति तदीयभाष्य एव प्रतिपादिततया तयोर्मन्त्रयोर्भिन्नार्थत्वसमर्थनस्य तद्विरुद्धत्वात् । तस्माद्द्वा सुपर्णेति मन्त्रो जीवपरमात्मपर एव । सत्त्वक्षेत्रज्ञशब्दावपि तत्पराविस्येव युक्तम् ॥ २ ॥

प्रकृतमनुसरामः—

यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।

तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

पश्यतीति पश्यः । पाघ्राध्माधेट्दृशः शः [ पा०सू० ३ । १ । १३७ ] इति शप्रत्ययः । शित्त्वात्पश्यादेशः । यस्मिन्काले पश्यो ब्रह्मदर्शी, 'आदित्यवर्णं तमसः परस्तात् । हिरण्यश्मश्रुर्हिरण्यकेशः' [छा० १।६।६] इत्युक्तरीत्या देदीप्यमानमङ्गलविग्रहयुक्तं जगदीशितारं तत्कर्तारं ब्रह्मयोनिं तस्मादेतद्ब्रह्मेतिनिर्दिष्टाव्याकृतब्रह्मोपादानभूतम् ।

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

इत्युक्तरीत्या पुरुषशब्दनिर्दिष्टं वासुदेवं यदा पश्यति तदा पुण्यपापे निरस्य निरस्तप्रकृतिलेपः सन्नपहतपाप्मत्वादिगुणाष्टकलक्षणेन ब्राह्मेण रूपेण परमं साम्यमुपैतीत्यर्थः । ब्रह्मयोनिमित्यत्र व्यासार्यैः षष्ठीतत्पुरुषे लक्षणाप्रसङ्गाद्ब्रह्मयोनिशब्दयोः सामानाधिकरण्यमित्युक्तं तदतिसुन्दरम् ॥ ३ ॥

प्राणो ह्येष यः सर्वभूतैर्विभाति ।

सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्तीत्यादाविव प्राणशब्दः परमात्मपरः । एष परमात्मा सर्वभूतैराश्रितो भवतीत्यर्थः ।

विजानन्विद्वान्भव तेनातिवादी ।

भवेति लोण्मध्यमपुरुषैकवचनं विजानञ्छ्रवणमननाभ्यां जानन्विद्वांस्तमुपासीनस्तेन परमात्मनाऽतिवादी भवेति शिष्यं प्रत्युपदेशः । अतीत्य सर्वान्वदितुं शीलमस्य सोऽतिवादी । यस्तु स्वोपास्यदेवतायाः सर्वातिशायित्वं वदति सोऽतिवादीत्युच्यते ।

आत्मक्रीड आत्मरतिः ।

यस्य क्रीडाऽऽत्मन्येव नोद्यानादिषु स आत्मक्रीडः । यस्य रतिरात्मन्येव न स्रक्चन्दनादिषु स आत्मरतिः । रतिः स्रक्चन्दनादिजन्या प्रीतिः क्रीडोद्यानादिजन्येति भूमाधिकरणे व्यासार्यैरुक्तत्वात् ।

क्रियावान् ।

अननुसंहितफलक्रियानुष्ठानशीलः । एवंभूतश्च भवेति योजना । क्रियावत्त्वं किमर्थमित्यत्राऽऽह—

एष हि ब्रह्मविदां वरिष्ठः ॥ ४ ॥

इति ।

क्रियया ह्यन्तःकरणे परिशुद्धे ब्रह्मविद्यानिष्पत्त्या ब्रह्मविदां वरिष्ठो भवति ॥ ४ ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो-
यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥

रागादिदोषशून्या जितेन्द्रिया यं पश्यन्ति स शरीरान्तर्वर्ती ज्ञानमयो निर्दोष आत्मा ।

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।

इत्युक्तबाह्याभ्यन्तरेन्द्रियैकाग्र्यलक्षणतपसाऽऽगमोत्थज्ञानेन च स्त्रीसंङ्गादिराहित्यलक्षणनित्यब्रह्मचर्येण च सत्येन भूतहितवचनेन च लभ्यः साक्षात्कर्तव्यः । अथवा लभ्यः प्राप्य इत्यर्थः । प्राप्तिश्चोपासनाद्वारेति द्रष्टव्यम् ॥ ५ ॥

सत्येन लभ्य इत्युक्तं सत्यं स्तौति—

सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः ।

लोके सत्यमेव जयति नानृतं सत्यवादिना ह्यनृतवादी परिभूयते । अर्चिरादिरूपेण विततो विस्तीर्णो देवयानाख्यः पन्थाः सत्येन हि भवति सत्यवादिनो हि भवतीत्यर्थः ।

तं मार्गं विशिनष्टि—

येनाऽऽक्रमन्त्यृषयो ह्याप्तकामाः ।

विगततृष्णाः सत्यदर्शिनो येन मार्गेण तत्प्राप्नुवन्ति हि । किं तदित्यत्राऽऽह—

यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

यत्र स्थाने सत्यवदनस्य परमप्रयोजनभूतं मूर्तं ब्रह्माऽऽस्ते तत्स्थानमित्यर्थः ॥ ६ ॥

अर्चिरादिप्राप्यं विशिनष्टि—

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।

स्वरूपतो गुणतश्च बृहत्परमाकाशनिलयं वाङ्मनसागोचरकमनीयरूपवत्सर्वाचेतनान्तःप्रवेशनसमर्थाज्जीववर्गादपि तदनुप्रवेशसमर्थतया सूक्ष्मतरं दीप्यते ।

दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७॥

दूराद्दूरे प्रकृतेः परस्ताद्वर्तमाने परमपदेऽन्तिकेऽण्डान्तर्वर्तिनि रविमण्डले पश्यत्सु ब्रह्मदर्शिष्विहैव हृदयाकाशे च निहितमित्यर्थः ॥ ७ ॥

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ।

देवा इन्द्रियाणि शिष्टं स्पष्टम् ।

ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं
पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

ज्ञायतेऽनेनेति व्युत्पत्त्या 'प्रज्ञा च तस्मात्प्रसृता पुराणी' [श्वे०४।१८] इति श्रुत्युक्तरीत्या ज्ञानप्रसरणहेतुः परमात्मा ज्ञानशब्देनोच्यते । अयमन्वयः—निष्कलं परमात्मानं ध्यायन्परमात्मप्रसादेन विशुद्धान्तःकरणो भवति । तदनन्तरं दर्शनसमानाकारज्ञानेन तं विषयी करोतीत्यर्थः ॥ ८ ॥

एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन्प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां
यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥

यस्मिन्नात्मनि प्राणापानादिपञ्चरूपेण विभक्तः प्राण आश्रित इतरैरिन्द्रियैः सह प्रजानां सर्वमपि मन आश्रितम् । यस्मिंश्च परमात्मनि विशुद्धे प्रसन्ने सत्येष जीवात्माऽपहतपाप्मत्वादिगुणाष्टकविशिष्टतयाऽऽविर्भवति । एष दुर्विज्ञेय आत्मा विशुद्धेन मनसा ग्राह्य इत्यर्थः ॥ ९ ॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते
यांश्च कामान्। तं तं लोकं जयति[1] तांश्च कामान् ॥

संविभाति संकल्पयतीत्यर्थः। कामान्स्त्र्यादीञ्जयति वशी करोतीत्यर्थः। शिष्टं स्पष्टम्।

तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषत्प्रकाशिकायां तृतीयमुण्डके
प्रथमः खण्डः ॥ १ ॥

---

यस्मादसौ वशीकृतलोककामतया लोकान्कामांश्च प्राप्तुं स्वभक्तान्प्रापयितुं च शक्नोति तस्मादैश्वर्यादिकामः प्रीतोऽसावात्मज्ञो मह्यमभिलषितं वरं प्रयच्छतीति बुद्ध्या पूजयेदित्यर्थः ॥ १० ॥

इत्यथर्ववेदीयमुण्डकोपनिषत्प्रकाशिकायां तृतीयमुण्डके
प्रथमः खण्डः ॥ १ ॥

---

आत्मवित्पूजाया मोक्षफलकत्वमाह—

स वेदैतत्परमं ब्रह्म धाम
यत्र विश्वं निहितं भाति शुभ्रम्।

यत्र ब्रह्मणि विश्वं जीवजातं निहितं निर्मलं स्वप्रकाशं भात्येतदीदृशं सर्वकामास्पदतया धामशब्दितं परं ब्रह्म स पूर्वप्रकृत आत्मज्ञो वेदेत्यर्थः।

उपासते पुरुषं ये ह्यकामास्ते
शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

ये प्रज्ञाशालिनस्तादृशमात्मज्ञं पुरुषं फलान्तरकामनारहिता मुमुक्षवः सन्तः परमात्मानमिवोपासते त एतच्छुक्रं चरमधातुमतिक्रम्य वर्तन्ते जन्मशून्या भवन्तीत्यर्थः ॥ १ ॥

---

१ आनन्दाश्रमस्थपुस्तके—जयते।

कामान्यः कामयते मन्यमानः
स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु
इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

यस्तु देवत्वमनुष्यत्वादीन्कामान्भोग्यतया मन्यमानः कामयते स तत्र देवत्वमनुष्यत्वादौ कामभिः कामैस्तत्तत्कामवशादिति यावत् । देवमनुष्यादिरूपेण जायते पर्याप्ते परिपूर्णे ब्रह्मणि कामनावतो विदितात्मतत्त्वस्यास्मिन्नेव जन्मन्याशा लुप्ता न जन्मान्तरप्रसक्तिरित्यर्थः । कृतात्मन इत्यत्र शब्ददर्दुरं करोतीत्यत्रेव कृधातोर्ज्ञानमर्थः ॥ २ ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥

प्रवचनशब्देन मननं लक्ष्यते । तत्साधनत्वान्मेधाशब्दश्च निदिध्यासनवाची । श्रवणमनननिदिध्यासनैः केवलैर्न प्राप्य इत्यर्थः । किंतु तत्राऽऽह—

यमेवैष वृणुते तेन लभ्यः ।

एष परमात्मा यमुपासकं वृणते तेन प्राप्यस्तेन वरणीयेन प्राप्य इति यावत् । प्रियतमश्च वरणीयो भवति प्रियतमत्वं च स्वस्मिन्प्रीतिमत एव । अतश्चायमर्थो लभ्यते । यस्तु परमात्मनि निरतिशयप्रीतिमान्स परमात्मानं प्राप्नोतीत्यर्थ उक्तो भवति । प्रीतिरूपापन्नभगवदुपासनस्य भगवत्प्रीतिद्वारा भगवत्प्राप्तिहेतुत्वमित्यर्थः ।

तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥

तादृशस्योपासकस्यैष आत्मा स्वात्मानं प्रकाशयति स्वानुभवमुत्पादयतीत्यर्थः ॥ ३ ॥

नायमात्मा बलहीनेन लभ्यो न
च प्रमादात्तपसो वाऽप्यलिङ्गात् ।

अयमात्माऽवसन्नमनसा न लभ्यः । अवसादो नाम देशकालवैगुण्यादिजन्यदैन्यं तदभावो हि बलम् । प्रमादोऽनवहितचित्तता । तपःशब्द-

स्तपःप्रधानसंन्यासाश्रमपरः । तप एव द्वितीय इतिवत् । तस्य लिङ्गं शिखायज्ञोपवीतशिक्यजलपवित्रादि तद्रहितात्संन्यासादपीत्यर्थः । तपस इत्येतदाश्रमान्तरस्याप्युपलक्षणम् । सर्वाश्रमाणामपि ब्रह्मविद्याधिकारसत्त्वादिति द्रष्टव्यम् । लिङ्गशून्यैराश्रमैर्नप्राप्य इत्यर्थः । आश्रमलिङ्गान्यपेक्षितानीति यावत् ।

एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष
आत्मा विशते ब्रह्म धाम ॥ ४ ॥

उक्तैर्बलाप्रमादसलिङ्गाश्रमैर्यो विद्वान्ब्रह्मप्राप्तये यतते तस्य तादृशोपायसंस्कृतमात्मस्वरूपं धाम प्राप्यं परं ब्रह्म प्राप्नोतीत्यर्थः ॥ ४ ॥

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृता-
त्मानो वीतरागाः प्रशान्ताः ।

तत्त्वदर्शिन एनं परमात्मानं जीवदशायामेवानुभूय तेनानुभवेन संतुष्टा लब्धात्मसत्ताका अपगतविषयाशा अत एव निगृहीतेन्द्रियाश्च ये सन्तीत्यर्थः ।

ते सर्वगं सर्वतः प्राप्य धीरा
युक्तात्मानः सर्वमेवाऽऽविशन्ति ॥ ५ ॥

ते सर्वदेशावच्छेदेनान्तर्बहिश्च सर्ववस्तुगतं परमात्मानं देशविशेषविशिष्टं प्राप्याऽऽविर्भूतब्राह्मरूपविशिष्टात्मानो धर्मभूतज्ञानेन सर्वं वस्तु गत्या व्याप्नुवन्ति सर्वमनुभवन्तीत्यर्थः ॥ ५ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।

ये निर्जितेन्द्रियग्रामाः काम्यकर्मसंन्यासेन शुद्धान्तःकरणा वेदान्तश्रवणजन्यज्ञानेन निर्ज्ञातपरमात्मतत्त्वा इत्यर्थः ।

ते ब्रह्मलोके तु परान्तकाले
परामृतात्परिमुच्यन्ति सर्वे ॥ ६ ॥

ब्रह्मैव लोको ब्रह्मलोकस्तत्र वर्तमाना ब्रह्मनिष्ठाः परान्तकाले,—

अन्तकाले च मामेवेत्युक्तचरमदेहावसानसमये परामृतात्प्रसन्नाद्ब्रह्मणो हेतोः सर्वे परिमुच्यन्त इत्यर्थ इति 'विशेषं च दर्शयति' [ ब्र० सू० ४ । ३।१६ ] इति सूत्रे व्यासार्यैरयं मन्त्रखण्डो विवृतः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे । इति पाठे ते चरमशरीरावसाने भगवल्लोकेषु परममृतशब्दितं ब्रह्म प्राप्यप्रापकत्वेन येषां ते परामृता ब्रह्म प्राप्ता इति यावत् । स्वरूपतिरोधायकाविद्यया सवासनं विमुक्ता भवन्ति । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' [ छा० ८ । ३ । ४ ] इति श्रुतेरित्यर्थः । न च भगवल्लोकस्यैकतया कथं बहुत्वमिति शङ्कनीयम् । परिपूर्णस्य सर्वगतस्य सत्यसंकल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति(?)[ इति ] श्रुतिस्मृतीतिहासप्रामाण्यादिति भगवता भाष्यकृतोक्तत्वात् ॥ ६ ॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रति देवतासु ।

मुच्यमानजीवोपकारिकाः प्राणश्रद्धाकाशवायुज्योतिरप्पृथिवीन्द्रियमनोऽन्नवीर्यतपोमन्त्रकर्मलोकनामानीति षोडश कलाः । 'स प्राणमसृजत प्राणाच्छ्रद्धाम् ।' [ प्र० ६।४। ] इत्यादिप्रश्नोपनिषदुक्तप्राणादिनामान्तषोडशकलामध्ये कर्मव्यतिरिक्ताः पञ्चदश कलाः स्वस्वप्रकृतिषु संश्लेषविशेषयुक्ता भवन्ति । देवा वागादीन्द्रियाणि तदधिष्ठात्रादिदेवतासु प्रतिष्ठां संसर्गविशेषं गच्छन्ति न तु लीयन्ते । इन्द्रियादीनामाकल्पस्थायित्वात् । 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' [ बृ० ३।२।१३ ] इत्यादिषु वागादीनामग्न्याद्यप्ययश्रवणस्य भाक्तत्वमित्यग्न्यादिगतिश्रुतिरिति चेन्न । 'भाक्तत्वात्' इति सूत्रितत्वात् ।

कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति ॥७॥

यानि च कर्माणि अदत्तफलानि दर्शनसमानाकारज्ञानारम्भसमये क्षयिष्य इति संकल्पविषयभूतानि तानि कर्माणि च विज्ञानमय आत्मा चाक्षरात्परत इति सर्वस्मात्परभूतेऽव्ययेऽक्षर एकी भवन्ति । परमात्मप्रीत्यप्रीतिरूपाणां कर्मणां तत्रैकीभावस्तद्धर्मभूतज्ञाने लय एव । जीवस्यैकीभावो नामरूपात्मकभेदकाकारप्रहाणम् । कर्मणां नाशात्कलानां मुच्यमानं प्रति नोपकरणत्वमिति भावः ॥ ७ ॥

तदेवोत्तरमन्त्रेण विशदयति—

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।

यथा गङ्गायमुनासरस्वत्यादिनद्यः स्वोत्पत्तिस्थानेभ्यः प्रसृता गङ्गायमुनासरस्वत्यादीनि नामानि शुक्लकृष्णलोहितादीनि रूपाणि च विहायैकतामिव भजन्ते।

तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

तद्वदेषु भेदकैर्नामरूपादिभिर्विमुक्तः सन्। दिव्यो ह्यमूर्तः पुरुष इति मन्त्रप्रतिपाद्यं पुरुषं प्राप्नोति। यथा नदीसमुद्रजलयोर्वस्तुतो नैक्यमपि तु भेदकाकारप्रहाणमात्रमेवमिहापि मुक्तस्य परमात्मना पूर्वमुक्तात्मभिरपि नैक्यमपि तु परमसाम्यमात्रम्। अत एव कठवल्ल्यां शुद्धे शुद्धमासिक्तं तादृगेव भवतीति सादृश्यमेवोक्तं न तु तद्भावः। नन्ववयवातिरिक्तावयव्यन्तराभाववादिनां परस्परसङ्गतानां घटावयवानां भिन्नानामेव सतामेकत्वावस्थाश्रयत्ववत्कुण्डलकटकादीनां मूषानिक्षिप्तानामग्नितापद्रुतानां वस्तुतो भिन्नानामप्येकत्वावस्थाश्रयत्ववन्नदीसमुद्रजलयोरपि परस्परमिलितयोः संसर्गिद्रव्ययोरैकतावस्थाश्रयत्वमस्ति। ततश्च निर्विशेषब्रह्मैकतापत्तिरेव परं मुक्तिरिति चेन्न। निर्गुणविद्याश्रेष्ठत्वेन पराभिमतायां प्रजापतिविद्यायामपि स तत्र पर्येतीति मुक्तब्रह्मणोराधाराधेयभावश्रवणात्सत्यकामत्वसत्यसंकल्पत्वादिरूपधर्माणां मुक्तावेवाऽऽविर्भावस्य निर्गुणविद्याफलत्वेनोत्तराच्चेदाविर्भूतस्वरूपास्त्वित्यत्र परैरप्यङ्गीकृतत्वात्। न च सत्यकामत्वं सत्यसंकल्पत्वं च जीवस्य स्वरूपमात्रमिति शक्यते वक्तुम्। कामशब्दोदितानां कामनाविषयसृज्यपदार्थानां संकल्पशब्दोदितस्य तत्सृष्टिहेतुमायावृत्तिविशेषस्य च स्वरूपाद्बहिर्भावावश्यंभावात्। तेषां च मुक्तावाविर्भावे कथं निर्विशेषतापत्तिः। अनाविर्भावे च प्रजापतिविद्यायां य आत्माऽपहतपाप्मेत्यादिना गुणाष्टकोपदेशवैयर्थ्यम्। न हि प्रजापतिविद्यायां गुणाष्टकोपदेशस्योपासनार्थत्वं संभवति। परैस्तत्रोपासनाविध्यनङ्गीकारात्। नापि तदवगत्यर्थ उपदेशः। मुक्त्यर्थावगतेः शुद्धब्रह्मविषयत्वात्। तत्त्वमसीत्युपदेशस्थले ब्रह्मणो जगदुपादानत्वादिवर्णनस्याध्यारोपापवादन्यायेन निष्प-

पञ्चत्वबोधनार्थतयैवात्र प्रकारान्तरेण सार्थकत्वोपपादनायोगात् । नापि रुच्युत्पादनार्थः । गुणकीर्तनस्य निर्गुणविद्यारुच्युत्पादकत्वासंभवात् । अतो निर्गुणविद्याप्रकरणेऽपहतपाप्मत्वाद्युक्तेराविर्भविष्यत्तया तद्बोधनार्थतयैव साफल्यं वाच्यम् । अतश्च मुक्तौ निर्विशेषब्रह्मभावापत्तिकथनमसंगतम् ॥ ८ ॥

स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति ।

य एतत्परं ब्रह्म वेद । वेदनं ध्यानविश्रान्तध्यानं श्रान्तं ध्रुवस्मृतौ सा च दृष्टिर्भक्तित्वमृच्छतीत्युक्तरीत्या प्रीतिमापन्नदर्शनसमानाकारोपासनयुक्तो भवति । आविर्भूतब्रह्मरूपो भवतीत्यर्थः । आनुषङ्गिकं प्रयोजनमाह—

नास्याब्रह्मवित्कुले भवति ।

अस्य कुलेऽब्रह्मविन्न भवतीत्यर्थः ।

तरति शोकं तरति पाप्मानम् ।

स्पष्टोऽर्थः ।

गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

त्रिगुणात्मप्रकृतिकारितरागद्वेषादिभ्यो विमुक्तः सत्याादिर्भूतगुणाष्टको भवति ॥ ९ ॥

तदेतदृचाऽभ्युक्तम् ।

एतद्विद्यासंप्रदानमभिमुखीकृत्य ऋङ्मन्त्रेणोक्तम् ।

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः

स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।

नित्यनैमित्तिकक्रियायुक्ता अधीतवेदा ब्रह्म बुभुत्सव एकर्षिशब्दितमग्निहोत्रं स्वयमेव जुह्वतीत्यर्थः । एकर्त्विग्मात्रसाध्यस्याग्निहोत्रस्यैकर्षित्वमित्यर्थः । यद्वा, एकश्चासावृषिश्च मुख्यर्षिः परमात्मा तथा प्राण इत्यत्र ऋषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यत इति भाषितत्वात् । तत्र श्रद्धायुक्ता इत्यर्थः ।

१ आनन्दाश्रमस्थपुस्तके—परमं ।

तेषामेवैतां ब्रह्मविद्यां वदेत शिरो-
व्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

अत्र विद्याशब्दो ग्रन्थसंदर्भे वर्तते। तेषामेवैतां ब्रह्मप्रतिपादिकां वेदरूपां विद्यां प्रब्रूयाद्यैः शिरस्यङ्गारपात्रधारणालक्षणमाथर्वणिकानां वेदव्रतत्वेन प्रसिद्धं यथाशास्त्रमनुष्ठितमित्यर्थः। अयं चार्थः—'स्वाध्यायस्य तथात्वे हि' [ब्र० सू० ३।३।३] इति सूत्रे भाष्ये स्पष्टः। इत्थं हि तदधिकरणम्—नानाशाखास्वाश्रितानि वैश्वानराक्षरोपासनासंवादीनि अभ्यासप्रकरणान्तराभ्यां भिद्यन्ते। इतरथा पुनःश्रवणलक्षणाभ्यासस्य प्रकरणान्तरस्य च वैयर्थ्यप्रसङ्गादिति शाखान्तराधिकरणपूर्वपक्षन्यायेन पूर्वपक्षे प्राप्ते। 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' [ब्र० सू० ३।३।१] सर्ववेदान्तेषु प्रतीयमानं वैश्वानराद्युपासनमेकमेव चोदनाद्यविशेषात्। चोदना तावत्, 'वैश्वानरमुपासीत' इत्यादिकैकरूपैव। ब्रह्मप्राप्तिरूपफलसंयोगोऽप्यविशिष्टः। उपास्यरूपमप्यविशिष्टं वैश्वानरविद्येति समाख्याऽप्यविशिष्टा। अत 'एकं वा संयोगरूपचोदनाख्याविशेषात्'। [जै० सू० २।४।९] इति शाखान्तराधिकरणसिद्धान्तसूत्रोक्तन्यायेनोपासनैक्यमेव स्वीकर्तव्यम्। 'भेदान्नेति चेन्नैकस्यामपि' [ब्र० सू० ३।३।२] शाखान्तरेऽभ्यासप्रकरणान्तरादिवशेन विद्याभेदावश्यंभावान्न विद्यैक्यं विद्यैक्ये पुनःश्रवणवैयर्थ्यप्रसङ्गादिति चेन्न। एकस्यामपि विद्यायामध्येतृभेदात्पुनःश्रवणसार्थक्योपपत्तेर्न विद्याभेदः। ननु विद्यैक्ये मुण्डकाम्नाताक्षरविद्यायाः शाखान्तरा[धी]ताक्षरविद्यैक्ये सति 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्याथर्वणिकमात्रानुष्ठेयं शिरोव्रतान्तर्गतत्वं शाखान्तराधीताक्षरविद्याया अपि स्यात्। नचेष्टापत्तिः। शिरोव्रतशून्यानामनाथर्वणिकानामक्षरविद्यानिष्ठा न स्यात्। अत आथर्वणिकमात्रानुष्ठेयशिरोव्रताङ्गकमुण्डकाम्नाताक्षरविद्यायाः शाखान्तराधीताक्षरविद्या भिद्यत इत्यभ्युपगन्तव्यमिति चेत्तत्राऽऽह—'स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः' [ब्र०सू० ३।३।३] तथात्व इति निमित्तसप्तमी। स्वाध्यायस्य तथात्वसिद्ध्यर्थमध्ययनजन्यसंस्कारभाक्त्वसिद्ध्यर्थं शिरोव्रतोपदेशः। शिरोव्रताङ्गकाध्ययनेनोपनिषद्रूपस्वाध्यायस्य संस्कारो भवति। उपनिषदध्ययनाङ्गं शिरोव्रतं न विद्याङ्गम्। 'नैतदचीर्णव्रतोऽधीते' [मुण्ड० ३।२।११] इति

शिरोव्रतस्याध्ययनसंयोगावगमात्। समाचाराख्याथर्वणिकग्रन्थ इदमपि वेदव्रतत्वेन व्याख्यातमिति शिरोव्रते वेदव्रतशब्दप्रयोगाच्चाध्ययनाङ्गमेव शिरोव्रतं न विद्याङ्गम्। सववच्च तन्नियमः। यथा सप्त सौर्यादयः शतौदनपर्यन्ताः सप्त सोमा आथर्वणिकैकाग्निसंबन्धात्तत्रैव नियता भवन्ति। एवं शिरोव्रतमप्याथर्वणिकाध्ययनसंबन्धात्तत्रैव नियतं भवति। दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्। तथा हि च्छान्दोग्ये—'तस्मिन्यदन्तस्तदन्वेष्टव्यम्।' [८।१।१] इत्युक्त्वा किं तत्र विद्यते यदन्वेष्टव्यमिति प्रश्नपूर्वकमपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम्। तैत्तिरीयके तु च्छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्। इति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते। तदेतदुपजीवनं विद्यैक्यं दर्शयति। एवं सिद्धस्य विद्यैक्यस्य प्रयोजनमुच्यते—'उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च' [ब्र० सू० ३।३।५] एवं सर्ववेदान्तेषु समाने सत्युपासने वेदान्तराम्नातगुणा वेदान्तान्तर उपसंहर्तव्या विधिशेषवदर्थाभेदात्। यथैकस्मिन्वेदान्ते श्रुतौ वैश्वानरदहरादिविधिशेषो गुणस्तद्विद्यासंबन्धात्तदुपकारायानुष्ठीयते। तथा वेदान्तरोदितोऽपि गुणस्तत्संबन्धित्वाविशेषादुपसंहर्तव्यः। चशब्दोऽवधारणे। एवं गुणोपसंहारपादाद्ये स्थितम्।

तदेतत्सत्यमृषिरङ्गिराः प्रोवाच।

एतत्सत्यमक्षरमङ्गिरा ऋषिः शौनकाय प्रोवाच।

नैतदचीर्णव्रतोऽधीते।

अचीर्णशिरोव्रतैरेतन्नाध्येतव्यमित्यर्थः। 'तेषामेवैतां ब्रह्मविद्यां वदेत' इति पूर्वमन्त्रेऽचीर्णशिरोव्रतायैतदध्यापनं निषिद्धम्। अस्मिंस्तु वाक्येऽचीर्णशिरोव्रतस्याध्ययनं निषिध्यत इति भेदो द्रष्टव्यः। इयमुपनिषत्सर्वाऽपि भगवत्परेति भगवता बादरायणेन समन्वयाध्याये द्वाभ्यामधिकरणाभ्यां निर्णीतम्। तथा हि—'अदृश्यत्वादिगुणको धर्मोक्तेः' [ब्र० सू० १।२।२१] इत्यधिकरणेऽद्रेश्यमग्राह्यमित्यचेतनधर्माणां दृश्यत्वादीनां निषेधस्तत्प्रसक्तिमत्यचेतन एवावस्थान्तरापन्ने युज्यते न तु तत्प्रसक्तिशून्ये परमात्मनि अबालोऽतरुण इत्यादिनिषेधास्तत्प्रसक्तिमत्यवस्थान्तरापन्नमनुष्यादावेव दृष्टाः। न तु तत्प्रसक्तिशून्यपाषाणादा-

शादौ । किंचाद्रेश्यत्वादिविशिष्टस्याक्षरस्य परमपुरुषत्वे, अक्षरात्परतः पर इति ततोऽपि परस्य पुरुषस्य श्रवणं नोपपद्यते । अतोऽक्षरात्परतः पर इति पुरुषगतपरत्वावधितयाऽक्षरादितिनिर्दिष्टस्य भूतयोन्यक्षरस्य परमपुरुषत्वासंभवादक्षरशब्दस्य प्रधाने प्रसिद्धेश्चाद्दश्यत्वादिगुणकं भूतयोन्यक्षरं प्रधानमेव तत्परतया निर्दिश्यमानः पुरुषोऽपि पञ्चविंशक एव न तु परमपुरुषः । परमपुरुषस्याक्षरपरभूतजीवादपि परत्वेनाव्यवहितपरत्वाभावात् । न चाक्षरात्परत इति पदयोर्वैयधिकरण्याश्रयणेनाक्षरादपि परभूताज्जीवात्परत्वमेव पुरुषस्य प्रतिपाद्यत इति वाच्यम् । अक्षरात्परत इति पदयोः स्वकार्यवर्गापेक्षया परभूतेऽक्षरे सामानाधिकरण्येन वृत्तिसंभवे तयोर्वैयधिकरण्ये प्रमाणाभावात् । अतोऽत्र प्रकृतिजीवावेव प्रतिपाद्येते न परमात्मेति पूर्वपक्षे प्राप्ते 'अदृश्यत्वादिगुणको धर्मोक्तेः' [ ब्र० सू० १।२।२१ ] 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' [ ब्र० सू० १।२।२२ ] 'रूपोपन्यासाच्च' [ ब्र० सू० १।२।२३ ] इति त्रिभिः सूत्रैः सिद्धान्तः । तेषां चायमर्थः—अदृश्यत्वादिगुणकः परमात्मैव तद्धर्माणां सर्वज्ञत्वादीनां 'यःसर्वज्ञः सर्ववित्' [ मु० २।२।७ ] इत्यादिवाक्येनात्र प्रकरण उक्तत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिना सिद्धेन चेतनाचेतनात्मनिखिलप्रपञ्चोपादानत्वेन भूतयोन्यक्षरस्य विशेषणात् । 'अक्षरात्परतः पर इति प्रकृतिजीवाभ्यां भेदव्यपदेशाच्च भूतयोन्यक्षरं परात्मैव । न चाक्षरात्परत इति पञ्चम्योः सामानाधिकरण्यात्स्वकार्यवर्गापेक्षया परभूतादक्षरशब्दितादव्याकृतात्परत्वेन तद्भेदसिद्धावपि न जीवभेदः सिध्यतीति वाच्यम । सामानाधिकरण्ये सति परत्वावधिसमर्पकस्वकार्यवर्गवाचिपदान्तराध्याहारप्रसङ्गात् । वैयधिकरण्यपक्षेऽध्याहाराभावाज्जीवादपि वैलक्षण्यप्रतिपादकत्वेन सार्थक्यसंभवे परतःपदस्य सामानाधिकरण्याश्रयणेन स्वकार्यवर्गपरत्वानुवादस्य निष्प्रयोजनस्याऽऽश्रयणायोगात् । न चाक्षरात्परस्य पुरुषस्य परमात्मत्वे भूतयोन्यक्षरस्य कथं परमात्मत्वं सिध्येदिति वाच्यम् । अक्षरात्परत इति निर्दिष्टस्याक्षरस्य, 'अथ परा यया तदक्षरमधिगम्यते' [ मु० १।१।५ ] 'तथाऽक्षरात्संभवतीह विश्वम्' [ मु० १।१।७ ] 'तथाऽक्षराद्विविधाः सोम्य भावाः' [ मु० २।१।१ ] येनाक्षरं पुरुषं वेद सत्यम् [ मु० १।२।१३ ] इतिवाक्यनिर्दिष्टभूतयोन्यक्षरापेक्षया भिन्नत्वात् । न च तत्र प्रमाणाभावः ।

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ।

'अप्राणो ह्यमनाः शुभ्रः' [ मु० २ । १ । २ ] इति पूर्वसंदर्भप्रतिपादितविशेषणविशिष्टं भूतयोन्यक्षरं स इतिपदेन परामृश्य तस्याक्षरात्परतः परत्वाभिधानात् । न हि तस्यैव परतः परत्वं संभवति अतोऽक्षरात्परतः पर इति वाक्यस्थमक्षरपदमव्याकृताभिधायि न तु भूतयोन्यक्षराभिधायी । अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ [ मु० २ । १ । ४ ] इति भगवत्सम्बन्धितया प्रसिद्धस्य रूपस्य भूतयोन्यक्षरसंबन्धितयोपन्यासाच्च 'पुरुषं वेद सत्यम्' [ मु० १ । २ । १३ ] 'दिव्यो ह्यमूर्तः पुरुषः' [ मु० २ । १ । २ ] इति भगवदसाधारणपुरुषशब्दाभ्यासाच्च परमात्मैवात्र प्रतिपाद्यत इति निर्णीतम् । तथा 'यस्मिन्द्यौः' [ मु० २ । २ । ५ ] इति वाक्य ओतं मनः सह प्राणैश्च सर्वैरिति मनः प्राणसंबन्धित्वप्रतिपादनात् । 'अरा इव रथ नाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' [ मु० २।२।६ ] इति जीवलिङ्गाच्च भूतयोन्यक्षरप्रकरणं भङ्क्त्वा जीवपरत्वमेवास्य संदर्भस्याऽऽश्रयणीयमिति पूर्वपक्षे प्राप्ते 'द्युभ्वाद्यायतनं स्वशब्दात्' । [ ब्र०सू० १ । ३ । १] 'मुक्तोपसृप्यव्यपदेशाच्च' ॥ 'नानुमानमतच्छब्दात्' । 'प्राणभृच्च' । 'भेदव्यपदेशात्, । 'प्रकरणात्' । 'स्थित्यदनाभ्यां च' इति षड्भिः सूत्रैः सिद्धान्तः कृतः । अयमर्थः—द्युभ्वाद्यायतनं परमात्मा । अमृतस्यैष सेतुरिति मोक्षप्रदत्वलक्षणस्यासाधारणशब्दश्रवणात् । व्यापकत्वार्थस्याऽऽत्मशब्दस्य च श्रवणात् । 'नामरूपाद्विमुक्तः' । 'परात्परं पुरुषमुपैति दिव्यम्' इति परमात्मासाधारणमुक्तप्राप्यत्वव्यपदेशाच्च परमात्मैव । नानुमानमानुमानिकं प्रधानमस्मिन्प्रकरणे तत्प्रतिपादकशब्दाभावान्न प्रतिपाद्यम् । एवं प्राणभृज्जीवोऽपि तत्प्रतिपादकशब्दाभावान्न प्रतिपाद्यः । जुष्टं यदा पश्यत्यन्यमीशमिति प्रकरणप्रतिपाद्येशस्य जीवभेदव्यपदेशाच्च भूतयोनिप्रकरणाच्च । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' [इति]जीवस्य कर्मफलात्तृत्वं परमात्मनस्तु तदन्तरेण शरीरेऽवस्थानमिति परमात्मन एव प्रकरणतात्पर्यपर्यवसानभूमितया आविष्कृतत्वाच्च परमात्मैव मुण्डकोपनिषत्प्रतिपाद्य इति सिद्धान्तितम् । अतश्च मुण्डकोपनिषद्भगवत्परेति सिद्धम् । इयं ब्रह्मविद्या येभ्यो ब्रह्मादिभ्यः पारम्पर्येण प्राप्ता तान्नमस्यति ।

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

---

द्विर्वचनमादरार्थं विद्यासमाप्त्यर्थं च ॥ ११ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति मुण्डकोपनिषत्प्रकाशिका समाप्ता ।

---

इत्यथर्ववेदीया मुण्डकोपनिषत्समाप्ता ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

रामानुजमतानुयायिकूरनारायणविरचितप्रकाशिकोपेता ।

# माण्डूक्योपनिषत् ।

——:-*-:——

मुमुक्षोरधिकारिणो निखिलक्लेशनिवृत्तिपूर्वकं परमानन्दावाप्तये समस्तव्यस्तप्रणवप्रतिपाद्यभगवदुपासनां वक्तुं प्रवृत्तेयमुपनिषत् । आदौ समस्तप्रणवप्रतिपाद्यं तावदाह ।

हरिः ॐ ॥ ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ॥१॥

एतदिति श्रवणाद्यविषयत्वेति । ओमित्युक्तमिति शेषः । ओतं जगदस्मिन्निति व्युत्पत्त्योमित्युक्तं यद्ब्रह्मैतदक्षरं सत्यमिदंशब्दवाच्यस्य सर्वस्य चिदचिदात्मप्रपञ्चस्याक्षर ओतत्वात् । सर्वं केन निमित्तेनोंकारवाच्यं ब्रह्माक्षरमित्युच्यत इत्यतो न क्षरति कालत्रयेऽपीति व्युत्पत्त्या कालत्रय एकप्रकारतया नित्यत्वहेतुनेतिभावेन प्रज्ञापूर्वं प्रवृत्तिनिमित्तमाह—तस्येति । विशिष्याऽऽख्यायतेऽनेनेति व्याख्यानं प्रवृत्तिनिमित्तं तस्योमित्येतत्प्रतिपाद्याक्षरशब्दार्थत्व उपपन्नं व्याख्यानमुच्यत इत्यर्थः । तत्किमित्यत आह—भूतमिति । ओमित्युक्तं ब्रह्म भूतमतीतकाले विद्यमानं भवद्वर्तमानकाले सद्भविष्यदागामिकालेऽपि सच्छश्वदेकप्रकारमिति यावत् । अतोऽक्षरमुच्यत इत्यर्थः । इतिशब्दस्योपव्याख्यानमिति पूर्वेणान्वयः । यदक्षरस्य सर्वत्वमुक्तं तदस्याप्यस्ति किमित्यतो नेत्याह—सर्वमिति ओमित्याक्रियते प्रतिपाद्यत इत्योंकारः । कृञः कर्मणि घञ्प्रत्ययः । 'अचोञ्णिति' [पा० सू० ७ । २ । ११५ इति वृद्धिः]। घञबन्त इति पुंलिङ्गता । ओमित्युच्यमानमक्षरमेव सर्वं न त्वन्यदित्यर्थः । भूतमित्यादिनोक्तं शश्वदेकप्रकारत्वरूपं कालत्रयातीतत्वमक्षरपदप्रवृत्तिनिमित्तमपि नान्यस्येत्याह -- यच्चान्यदिति । कालत्रयकृतविकारहीनरूपं त्रिकालातीतं च यदन्यद्वस्त्वस्ति तदप्योंकार एव । ओमित्युच्यमानाक्षराख्यं ब्रह्मैव न ततोऽन्यत्तादृशमस्तीत्यर्थः ॥ १ ॥

सर्वमोंकार एवेत्यत्रोंपदवाच्यब्रह्मणः पूर्णत्वमुक्तं तत्कुत इत्याशङ्क्य प्रमाणसूचनेन निराकुर्वन्नाह—

सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ २ ॥

एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥

सर्वं ह्येतद्ब्रह्मेति । एतदोंकारपदवाच्यमक्षराख्यं ब्रह्म सर्वं पूर्णं हि । परमं यो महद्ब्रह्म ' ' तदेव ब्रह्म परमं कवीनाम् । ' पूर्णमदः पूर्णमिदमित्यादिषु प्रसिद्धमित्यर्थः । ननु जीवानामपि क्रियासु स्वातन्त्र्यानुभवेन तत्रापि कश्चिद्वृत्ति नियन्तेत्यत आह—अयमिति । ब्रह्मादिष्वादानकर्तृतया स्थितोऽयमात्माऽयं ब्रह्म प्रागुक्तोंपदवाच्यं ब्रह्मैव न त्वन्यः कश्चिदित्यर्थः । इति समस्तप्रणवप्रतिपाद्योक्तिः । एवं समस्तप्रणवप्रतिपाद्यमुपासनार्थं निरूप्येदानीं तस्यैकदेशैरकारोकारमकारनादैः प्रतिपाद्यानां विश्वादिभगवद्रूपाणामुपासनामकार उकारो मकार इत्यादिना तृतीयखण्डे वक्तुं तानि रूपाण्याह—सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः । स समस्तोंपदवाच्योऽक्षरनामाऽयं ब्रह्मादिषु नियामकतया स्थित आत्मा चतुष्पाच्चत्वारः पादा अंशाः स्वरूपभूता यस्य स चतुष्पात् । पादपदस्य 'संख्यासुपूर्वस्य' [ पा० सू० ५ । ४ । १४० । ] इत्यन्तलोपः । सर्वजीवनियामकतया तत्तद्देहेषु चतूरूपतया तिष्ठतीत्यर्थः ॥ २ ॥

कानि तेषां स्थानानि कश्च व्यापारः कीदृशानि तानि रूपाणि किं तेषां भोग्यं कानि नामानीत्यतस्तत्सर्वं क्रमेणाऽऽह—

जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्गः ।

यत्र स्थित्वा जागर्ति तच्चक्षुर्जागरितम् । अधिकरणे क्तप्रत्ययः । तदेव स्थानं यस्य स जागरितस्थानः । चक्षुःस्थान इत्यर्थः । बहिष्प्रज्ञः । बहिः शब्दो बाह्यार्थपरः । बाह्यानर्थान्प्रज्ञापयतीति बहिष्प्रज्ञः । जानातेरन्तर्भावितण्यर्थात् ' इगुपधज्ञाप्रीकिरः कः ' [ पा० सू० ३ । १ । १३५ ] इति कप्रत्ययः । ' आतो लोप इटि च ' [ पा० सू० ६।४। ६४ ] इत्याकारलोपः । सप्ताङ्गः । चत्वारो हस्ता द्वौ पादौ गजमुखत्वाद्गजहस्त एक इति सप्ताङ्गः । एकोनविंशतिमुखः । मध्यममुखं गजमुखाकारं पार्श्वद्वये तु नव नव मुखानि पुरुषमुखाकाराणीति विवेकः । स्थूल-

भुग्वैश्वानरः प्रथमः पादः । स्थूलाञ्छुभभोगान्भुङ्क्त इति स्थूलभुक् । वैश्वानरः । विश्यते गम्यते सर्वैर्ज्ञायत इति विशतेः कर्मणि वप्रत्ययः । अनेकार्थत्वाद्धातूनां विशतिरत्र मत्यर्थः सञ्ज्ञानपरः । विश्वं सर्वैर्ज्ञेयं स्थूलं वस्तूच्यते । भोक्तृतया तत्संबन्धी वैश्वः । न रीयते क्षीयत इति नरः । रीङ् क्षये डा मत्ययः । वैश्वश्चासौ नरश्चेति । 'नरे संज्ञायाम्' [ पा० सू० ६ । ३ । १२९ ] इति सूत्रेण भाष्योक्तनिरुक्तिबलाद्वा दीर्घे वैश्वानरः प्रथमः पादः । आत्मन इति विपरिणामेनात्रोत्तरत्र चानुषङ्गः । सर्वदेहेष्वादानकर्तृत्वेन स्थितस्याऽऽत्मनः प्रथमं रूपमित्यर्थः॥३॥

स्वप्नस्थानोऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंशति-
मुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः ॥ ४ ॥

स्वप्नस्थानः । यत्र स्थित्वा जीवः स्वाप्नपदार्थान्पश्यति तत्स्वप्नस्थानं तदेव स्थानं यस्य स स्वप्नस्थानः कण्ठदेशस्थ इत्यर्थः । अन्तःप्रज्ञः । अन्तःशब्दोऽत्र बाह्यार्थज्ञानजन्यवासनापरिणामरूपार्थपरः । तानन्तः स्थितान्वासनामयानर्थान्प्रज्ञापयति जानाति चेत्यन्तःप्रज्ञः । प्रज्ञ इति जानातेः कः । अत्र स्वाप्निकपदार्थानां जाग्रद्वासनाजन्यत्वोक्तिः प्रायिकत्वाभिप्राया । 'दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सर्वं पश्यति' [ प्र० ४ । ५ । ] इति श्रुतेः । सप्ताङ्ग एकोनविंशतिमुख इति प्राग्वत् । प्रविविक्तभुक् । वासनामयतया बाह्यार्थेभ्यो विविक्तान्स्वाप्नार्थान्भुङ्क्ते भोजयति चेति प्रविविक्तभुक् । तेजोमयचित्तस्थतया चित्तसंबन्धित्वेन तैजसनामाऽऽत्मनो द्वितीयः पादः । द्वितीयं रूपमित्यर्थः ॥ ४ ॥

तृतीयपादस्य स्थानं वक्तुं स्थानस्वरूपं तावदाह—

यत्र सुप्तो न कंचन कामं कामयते
न कंचन स्वप्नं पश्यति तत्सुषुप्तम्।
सुषुप्तस्थान एकीभूतः प्रज्ञानघन
एवाऽऽनन्दमयो ह्यानन्दभुक्चेतो-
मुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥

यत्र देशे सुप्तोऽज्ञानवृतः सुखरूपं भगवन्तं प्राप्त इति वा । 'प्राज्ञे-

नात्मना संपरिष्वक्तः' [ बृ० ४।३।२१ ] 'इत्यादेः। न कंचन कमपि कामं काम्यमानमर्थं कामयते न कंचन स्वप्नपदार्थं न च पश्यति। उपलक्षणमेतत्। स्वात्मानं विना किमपि न पश्यतीत्यर्थः। तत्स्थानं सुषुप्तमित्युच्यते। सुषुप्तमेव स्थानं यस्य स सुषुप्तस्थानः। हृत्कर्णिकाग्रस्थ इति यावत्। एकीभूतः। वैश्वानरतैजसाभ्यां संश्लेषविशेषरूपैकीभावं प्राप्तः प्रज्ञानघनः। अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टितेत्युक्तकर्मवेष्टनावृता जीवो घन इत्युच्यते सुषुप्तिवेलायां घनं तज्जीवस्वरूपं जानाति प्रज्ञापयति च जीवस्येति प्रज्ञानघनः। प्रपूर्वादन्तर्णीतण्यर्थाज्ज्ञा अवबोधन इति धातोः 'कृत्यल्युटो बहुलम्' [ पा० सू० ३।३।११३ ] इति बहुलग्रहणात्कर्मणि ल्युट्यनादेशे प्रज्ञानः प्रज्ञापितो घनो जीवो येन स प्रज्ञानघन इति विग्रहः। यद्वा घनप्रज्ञ इति वक्ष्यमाणत्वादिहापि प्रज्ञानघन इत्यस्य घनप्रज्ञान इति विपरीतसमासो ध्येयः। तथात्वेऽन्तर्णीतण्यर्थात्कर्तरि ल्युट्। आनन्दमयः। आनन्दप्रचुरः। पूर्णानन्द इति यावत्। 'यतो वाचो निवर्तन्ते' [ तै०२।४।१ ] इत्यादौ प्रसिद्धमिति हेरर्थः। आनन्दभुक्। विषयभोगान्विनैवाऽऽनन्दं भुङ्क्ते भोजयति चेत्यानन्दभुक्। अत्र स्थूलभुक्त्वं प्रविविक्तभुक्त्वं च नित्यपूर्णानन्दानुभवरूपस्य क्रीडारूपम्।[१] चेतोमुखः। ज्ञानरूपमुखः। मुखेत्युपलक्षणम्। ज्ञानरूपसर्वावयव इत्यर्थः। एतदानन्दमयत्वचेतोमुखत्वरूपविशेषणद्वयं प्रागुक्तरूपद्वये नान्तःप्रज्ञमिति वक्ष्यमाणचतुर्थरूपे च ध्येयम्। प्राज्ञः। प्रकर्षेण न ज्ञापयतीति प्राज्ञः। जीवस्वरूपकालाज्ञानातिरिक्तं बाह्यं स्वाप्नं वा किमपि न ज्ञापयतीति प्राज्ञनामक इत्यर्थः। प्रपूर्वान्नञुपपदादन्तर्णीतण्यर्थात् 'आतश्चोपसर्गे' [ पा० सू० ३।१।१३६ ] इति कप्रत्ययः। आत्मनस्तृतीयः पादः। तृतीयं रूपम्॥ ५॥

एवं रूपत्रयं निरूप्य चतुर्थं पादं नान्तःप्रज्ञमित्यादिना निरूपयिष्यन्वैश्वानरादिरूपाणामुक्तस्थानव्यापाराद्यर्थेषु श्लोकान्विवक्षुर्मध्ये वक्ष्यमाणचतुर्थरूपेण सह चतुर्णां रूपाणां महिमानमाह—

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः
सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥

---

मैसूरस्थमुद्रितपुस्तके—१ सामान्येन ज्ञानानन्दादिरूपेणैकीभावं।

उष उक्तवक्ष्यमाणचतूरूपात्मा । एष इत्यस्याभ्यासस्तात्पर्यार्थः। अन्तर्याम्यन्तर्नियन्ता। सर्वस्य योनिः कारणमिति । अस्य विवरणं प्रभवाप्ययौ हि भूतानामिति । हि यस्मात्प्रभवाप्ययहेतुरत इत्यर्थः ॥ ६ ॥

उपनिषत्स्वयं प्रमाणमपि दार्ढ्याय स्वोक्तार्थे मन्त्रानुदाहरति। अत्रैते श्लोका भवन्ति । संवादिन इति शेषः ।

( अथ गौडपादीयकारिकाः )

बहिष्प्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ॥
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ १ ॥

वैश्वानरो बहिष्प्रज्ञस्तैजसोऽन्तःप्रज्ञः प्राज्ञः प्रज्ञानघन इत्युक्तार्थे मन्त्रमाह–बहिरिति । विश्वो वैश्वानरः । पदानामर्थः पूर्वत्रेव ध्येयः। स्मृत इति मन्त्रद्रष्ट्रा ब्रह्मणा भगवद्रूपाणामेतेषामेकत्वं स्मृतमित्यर्थः॥१॥

जागरितस्थानः स्वप्नस्थानः सुषुप्तस्थान इत्युक्तार्थे मन्त्रमाह–

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।
आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ २ ॥

मुखेऽग्रभागे । अन्तरित्यस्य विवरणं मनसीति । आकाशे च हृदयाकाशे हृत्कर्णिकाग्रस्थाकाश इत्यर्थः । स भगवानेक एवास्मिन्देहे त्रिधा स्थित इत्यर्थः ॥ २ ॥

स्थूलभुगित्याद्युक्तेऽर्थे मन्त्रमाह—

विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधत॥ ३ ॥

निबोधतेति मन्त्रद्रष्ट्रा ब्रह्मणा स्वोपदेश्यान्प्रत्युच्यते । एवं विजानथेत्यपि ध्येयम् ॥ ३ ॥

उक्त एवार्थे मन्त्रान्तरं पठति—

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ।
आनन्दं[1] च तथा प्राज्ञं त्रिधा तृप्तिं विजानथ[2] ॥ ४ ॥

स्थूलं भोग्यं वस्तु कर्तृ विश्वं कर्म । एवमग्रे नित्यतृप्तस्य स्थूलादिना

१ आनन्दाश्रमस्थपुस्तके—'आनन्दश्च । २ निबोधत ।

तृप्तिः क्रीडारूपा ध्येया। आनन्दमानन्दो लिङ्गव्यत्ययात्। विजानथ विजानीथ विकरणव्यत्ययात् ॥ ४ ॥

विश्वादिरूपत्रयस्वरूपं तत्तत्स्थानेषु तद्भोज्यस्वरूपं जानतः फलमाह—

त्रिषु धामसु यद्भोज्यं भोक्ता यस्तु प्रकीर्तितः ॥
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ५ ॥

त्रिषु धामसु अक्षिमनोहृदयाकाशरूपेषु यद्भोज्यं स्थूलादि यश्च भोक्ता विश्वादिरूपात्मैतदुभयं भोक्तृभोज्यलक्षणमुभयं यस्तु योऽधिकारी वेद जानाति स ज्ञानी विषयान्भुञ्जानोऽनुभवन्नपि तत्कृतलेपनं न प्राप्नोति तत्कृतोच्चादिविकारं न प्राप्नोतीत्यर्थः। तत्तत्स्थानेषु तत्तत्फलभोजयिता स्वस्य स्वेतरस्य च जीवस्य कर्मफलप्रदः सर्वेश्वर एव न ममात्र भोग इतरजीवानां वा स्वातन्त्र्यमिति मत्वा न विकरोतीति भावः ॥ ५ ॥

एष योनिः सर्वस्येत्युक्तार्थे मन्त्रमाह—

प्रभवः सर्वभावानां सतामिति विनिश्चयः ॥
सर्वं जनयति प्राणश्चेतोंऽशून्पुरुषः पृथक् ॥ ६ ॥

प्रभवति उत्पद्यतेऽनेनेति प्रभवः। सर्वभावानां सर्ववस्तूनां यथायोगमुत्पत्तिहेतुश्चतूरूपात्मेति योज्यम्। इति सतां विनिश्चय इत्युक्त्याऽसतामन्यथा निश्चय इति लभ्यते तदग्रे विवरिष्यते। सर्वप्रभवत्वं व्यनक्ति—सर्वं जनयति प्राण इति। सर्वस्य प्रणेतृत्वहेतुना प्राणनामा। सर्वं जनयतीत्युक्त्या न विवर्तरूपमुपादानत्वं सर्वप्रभवत्वमित्युक्तं भवति। पुरुषः पूर्णषड्गुणत्वादिना पुरुषनामा प्रागुक्तनामा चतूरूपात्मा हरिः। चेतोंऽशूञ्ज्ञानाख्यरश्मियुक्ताञ्जीवानिति यावत्। पृथग्देवदानवमानवादिभेदेन जनयति ॥ ६ ॥

सतामिति विनिश्चय इत्यत्रासतां वैपरीत्येन निश्चय इत्यर्थात्प्राप्तं तदुभयं व्यनक्ति विभूतिमित्यादिना—

विभूतिं प्रभवं[1] त्वन्ये मन्यन्ते सृष्टिचिन्तकाः।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ ७ ॥

सृष्टिविषयविचारवन्तोऽन्ये ब्रह्मस्वरूपपरिणामवादिनोऽसन्तः प्रभवं

१ आनन्दाश्रमस्थपुस्तके—१यश्च। २ प्रसवं।

सृष्टिं विभूतिं जीवजडात्मना विविधतया भवनं ब्रह्मणो मन्यन्ते। सृष्टिचिन्तका इत्यनेन यथावद्ब्रह्मस्वरूपानभिज्ञा इति सूचितम्। अन्यैर्ब्रह्मविवर्तः प्रपञ्च इतिवादिभिः सृष्टिर्विकल्पिता विविधतया कल्पिता। कथं स्वप्नमायासरूपेति। स्वाप्नपदार्थः सुप्तात्मविवर्तो यथा मायास्वरूपा तथा तत्स्वरूपब्रह्मविवर्तरूपा जाग्रत्सृष्टिरपि मायास्वरूपा। मायापदेन मायाविनिर्मितगन्धर्वनगरादिग्रहः। तत्सरूपा मिथ्याभूतेत्येवं विकल्पितेत्येर्थः ॥ ७ ॥

परिणामविवर्तयोरभावे कथं हरेर्जगतः सृष्टिरित्यतः सतां निश्चयप्रकारमाह—

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः।

केवलमिच्छेच्छामात्रमनायासेनाविलम्बेनाविकारत्वेन च प्रभोरवन्ध्यशक्तेः सृष्टिः प्रभुकर्तृका विश्वविषयिणी सृष्टिः। इतिसृष्टौ विषये विनिश्चिता ~~विनिश्चय~~वन्त औपनिषदा इत्यर्थः। भगवतः सत्यसंकल्पत्वात्स सर्वशक्तः स्वसंकल्पमात्रादेव सशरीरभूतचेतनाचेतनप्रपञ्चमग्रे सूक्ष्मं स्थूलरूपेण परिणाम्यस्वयमविकार एव सर्वात्मकः सर्वोपादानं भवतीति मन्यन्त इति भावः। विनिश्चिता इति कर्तरि क्तः।

पुनर्मतान्तराण्याह—

कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥ ८ ॥

कालचिन्तकाः कालमेवेश्वरं मन्वाना भूतानां प्रसूतिमुत्पत्तिं कालान्मन्यन्ते। उपलक्षणमेतत्। यदृच्छानियतिस्वभावादीनां तेषां निरासः पुरुषप्रभुपदाभ्यामेव ज्ञेयः। अत एवेच्छामात्रमित्यस्य पक्षस्य मध्ये निवेशः ॥ ८ ॥

तर्हि परिपूर्णस्य पुरुषस्य सृष्टिः किमर्थेत्यतो लोकानुग्रहार्थं स्वभाव इति वक्तुं मतान्तराण्याह—

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ॥
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ ९ ॥
इत्यथर्ववेदीयमाण्डूक्योपनिषदि प्रथमः खण्डः ॥ १ ॥

---

भोगार्थमिति। हरेस्तत्तस्यैव भोगार्थं सृष्टिरित्यन्ये मन्यन्ते। अपरे

तु महाराजस्य कन्दुकादिविहार इव क्रीडार्थं विश्वसृष्टिरिति मन्यन्त इत्यर्थः। स्वमतमाह श्रुतिः—देवस्येति। देवस्य क्रीडाशीलस्यैष लीलारूपोऽयं सृष्टयादिविषयः स्वभाव एव नान्यत्प्रयोजनमितिभावः 'लोकवत्तु लीलाकैवल्यम्' [ब्र० सू० २।१।३३] इति सूत्रम्। कुतः। आप्तकामस्य का स्पृहा प्रयोजनस्पृहा न काऽपीत्यर्थः। इति शब्दो रूपत्रयनिरूपणसमाप्तौ ॥ ९ ॥

इत्यथर्ववेदीयमाण्डूक्योपनिषत्प्रकाशिकायां प्रथमः खण्डः ॥ १ ॥

---

चतुर्थपादमात्मन आह—

(उपनिषत्)

नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः॥१॥

अन्तःप्रज्ञापयतीत्यन्तःप्रज्ञः। स्वप्नार्थप्रदर्शकः स नेत्यर्थः। न बहिष्प्रज्ञः। जाग्रदर्थप्रदर्शको न भवति। नोभयतःप्रज्ञम्। बाह्यशब्दादिकं जानन्स्वप्नार्थांश्च यदा पश्यति साऽपि काचिद्दशोभयत इत्यनेन गृह्यते। उभयतो बाह्याभ्यन्तररूपार्थान्प्रज्ञापयतीत्युभयतःप्रज्ञम्। स नेति नोभयतःप्रज्ञम्। एतद्दशाव्यापारो विश्वतैजसाख्येश्वररूपद्वयकर्तृको ज्ञेयः सोऽपि तुर्ये नास्तीत्यर्थः। न प्रज्ञानघनं प्राग्वद्विपरीतसमासः कर्तव्यो घनप्रज्ञानमिति। घनमज्ञानावृतं सुप्तजीवस्वरूपं प्रज्ञापयतीति घनप्रज्ञानं तन्न भवतीति न प्रज्ञानघनमित्युच्यते। न प्रज्ञम्। प्रकर्षेण ज्ञापयति मानसवासनामयं ध्येयमिति प्रज्ञं तन्नेति अयमपि स्वाप्निकव्यापारतुल्यतया तैजसाख्यभगवद्रूपव्यापारो द्रष्टव्यः। सोऽपि तुर्ये नेत्यर्थः। इदमुपलक्षणम्। जाग्रत्कालीननिर्विषयकेवलात्मस्फुरणरूपजडीभावाख्यावस्थानस्यापि। इदमपि सुषुप्तिव्यापारतुल्यतया प्राज्ञाख्यभगवद्व्यापारो ज्ञेयः। सोऽपि तुर्ये नास्तीति ध्येयम्। एवं विश्वतैजसप्राज्ञाख्यरूपत्रयव्यापारान्बाह्याभ्यन्तरपदार्थस्वरूपज्ञापनसुप्तस्वरूपज्ञापनरूपान्किंचिद्बाह्यकिंचित्स्वाप्नोभयरूपव्यापारं समाधिस्थनिरन्तरज्ञानसंतत्युत्पादनरूपव्यापारं जडीभावरूपव्यापारं चाकुर्वदित्यर्थः। नोभयतःप्रज्ञं

न प्रज्ञमित्यत्र किं रूपकर्तृकं व्यापारद्वयमस्य नेत्युच्यते तद्विचारणीयम् । तद्धि किं निर्व्यापारमेव चतुर्थं रूपं नेत्याह—नाप्रज्ञमिति । अप्रज्ञापकं नेति नाप्रज्ञं प्रज्ञापकमेव । मुक्तानां तद्योग्यसर्वज्ञानप्रदानरूपव्यापारकर्तृ इत्यर्थः । अदृष्टं विश्वादिरूपत्रयं बाह्याभ्यन्तरपदार्थज्ञापनतद्व्यवहाररूपकार्यलिङ्गेनानुमेयं न तथा चतुर्थं रूपं दृश्यमित्यदृष्टमिति वा । अमुक्तदृष्ट्यगोचरत्वाऽदृष्टमित्यर्थः । अव्यवहार्यमग्राह्यमिति । मुक्तिं विना तद्रूपविषयकग्रहणव्यवहारयोरभावादव्यवहार्यमग्राह्यमित्युच्यते । अलक्षणं लक्षणमनुमापकं जाग्रदादिप्रवृत्तिरूपानुमापकराहित्यादलक्षणम् । अतएवाचिन्त्यम् । अचिन्त्यत्वादेवाव्यपदेश्यं व्यपदेष्टुमशक्यम् । ऐकात्म्यप्रत्ययसारम् । एकः प्रधान आत्मा पूर्ण एकश्चासावात्मा चैकात्मा । एकात्मैवैकात्म्यं स्वार्थे ष्यञ्प्रत्ययो ज्ञानरूपः सार आनन्दरूप इत्यस्यैकात्म्यप्रत्ययसारम् । प्रपञ्चोपशमम् । पचि विस्तारे प्रपञ्चो विस्तृतो व्याप्त इति यावत् । उपशब्दोऽत्रोत्कृष्टवाची शमं सुखमुत्कृष्टानन्दरूपं प्रपञ्चश्चासावुपशमश्च प्रपञ्चोपशमस्तमैकात्म्यदेहबन्धानिष्टं प्रपञ्चं शमयतीति प्रपञ्चोपशममिति । शान्तम् । ऊर्मिषट्करहितम् । निर्दुःखसुखरूपत्वाच्छिवम् । अद्वैतं द्वीतिभावप्रधानं द्वित्वेन वस्तुतत्त्वापेक्षयाऽन्यात्मकरूपाद्द्वितीयेन प्रकारेणेतं ज्ञातं वस्तु द्वीतम् । इण् गतौ । द्वीतस्येदं द्वैतं मिथ्याज्ञानं न विद्यते मिथ्याज्ञानं यस्मात्तदद्वैतमहंममतादिमिथ्याध्यवसायनिवर्तकम् । एतादृशमात्मनश्चतुर्थं पादं मन्यन्त औपनिषदा इत्यर्थः । सोऽयमात्मा चतुष्पादिति प्रतिज्ञातं विश्वतैजसप्राज्ञतुरीयाख्यरूपचतुष्टयं सपरिकरं निरूप्य रूपत्रयविषये मन्त्रानुदाहृत्य चतुर्थविषये मन्त्रानुदाहरिष्यन्निदानीं चतूरूप आत्माऽवश्यं ज्ञातव्य इति वदन्नुपसंहरति स आत्मेति—य इति शेषः । स चतूरूपो विविधतया चतुर्विधतया विशेषेण च मुमुक्षुभिर्ज्ञेय इत्यर्थः ।

अत्रैते श्लोका भवन्ति ॥ ७ ॥

चतुर्थरूपस्योक्तं माहात्म्यं संवादयितुमाह—अत्रैत इति तुरीयस्योक्तार्थ एते वक्ष्यमाणाः श्लोकाः संवादिनो भवन्तीत्यर्थः ।

प्रपञ्चोपशममित्यादिनोक्तसर्वानिष्टनिवर्तकादिरूपेऽर्थे श्लोकमाह—

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ १० ॥

सर्वदुःखानां निवृत्तेः कारणमिति शेषः । ईशानः । ईशान्ब्रह्मादीन-

नति प्रेरयतीतीशानः । प्रभुः स्वामी । अव्ययः शश्वदेकप्रकारः । अद्वैतः । मिथ्याज्ञाननिवर्तकः । सर्वभावानाम् । भवन्तीति भावाः । भू सत्तायाम् । भगवज्ज्ञानेन लब्धसत्ताका इत्यर्थः । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' [ तै २ । ६ । ]इतिश्रुतेः । सर्वेषामधिकृतानामात्मनां देव उपास्यो विभुः समर्थः स्मृतो मन्त्रदृग्भिरिति शेषः ॥१०॥

नान्तःप्रज्ञं न बहिष्प्रज्ञमिति तुरीयस्य विश्वादिरूपत्रयवैधर्म्यमुक्तं तत्र मन्त्रमाह—

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः ॥ ११ ॥

अज्ञानकार्यभूतोऽहंममतादिभ्रमस्तद्रूपकार्यबन्धः । तत्कारणाविद्याबन्धः । कारणबन्धः । जीवनिष्ठताद्दशजाग्रत्पदार्थभ्रमाविद्यारूपकार्यकारणबन्धस्वामी विश्वः । तैजसस्तु अविद्याकार्यभूतोक्तरूपस्वाप्नपदार्थभ्रमणे तत्कारणाज्ञानेन च बद्धो जीवनिष्ठताद्दशबन्धस्वामीत्यर्थः । प्राज्ञस्तु तत्कारणाज्ञानरूपसुषुप्तिबद्धः सुषुप्तिबन्धस्वामी । तुरीये चतुर्थे रूपे द्वौ कार्यकारणबन्धनियमनव्यापारौ वा कारणमात्रव्यापारौ वा द्वावपि न सिध्यतो न स्त इत्यर्थः ॥ ११ ॥

न प्रज्ञानघनं नाप्रज्ञमित्युक्तप्राज्ञवैधर्म्ये मन्त्रमाह—

नाऽऽत्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किंचन संवेत्ति तुरीयं सर्वदृक्सदा ॥ १२ ॥

आत्मानं सुषुप्तजीवस्वरूपं न संवेदयेन्न परान्न सत्यं नापि चानृतं संवेदयेदित्यन्वयः । जीवस्वरूपसुखकालाज्ञानानि विना नान्यत्किमपि संवेदयेदित्यर्थः । तुरीयं तु सर्वदृक् । सर्वं दर्शयतीति सर्वदृक् । मुक्तौ तत्तद्योग्यं सर्वं प्रदर्शयतीत्यर्थः ॥ १२ ॥

शिवमद्वैतमिति तुरीयस्य मिथ्याज्ञाननिवर्तकत्वमुक्तं तत्प्राज्ञस्यापि सममिति वदंस्ततस्तुरीयस्य वैलक्षण्यान्तरमाह—

द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ १३ ॥

द्वैतस्य देहगेहादौ, स्वातन्त्र्यस्याग्रहणं ग्रहणाहेतुत्वं देहादौ स्वात-

तन्त्र्यभ्रमाजनकत्वं प्राज्ञतुरीययोस्तुल्यं समम् । बीजेति । देहगेहादौ स्वातन्त्र्यबुद्धिबीजभूतामूलाविद्या बीजनिद्रा तया युक्तस्तद्युक्तत्वप्रदः प्राज्ञः । सा च । चस्त्वर्थे । तुर्ये तु सा बीजनिद्रा तद्युतत्वप्रदत्वमितियावत् । न विद्यत इत्यर्थः ॥ १३ ॥

प्रकारान्तरेण विश्वादेः साधर्म्यवैधर्म्ये आह—

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ १४ ॥

उपलक्षणं जागत्स्वप्नभ्रमाभ्यां तद्धेतुनिद्राशब्दिताविद्यया युतौ द्वौ तदुभयसंबन्धनियामकौ विश्वतैजसौ प्राज्ञस्त्वस्वप्ननिद्रया द्विविधभ्रमं विना कृतकेवलाविद्यया युतस्तन्मात्रबन्धस्वामीत्यर्थः । निश्चिताः सम्यङ्निश्चयवन्तः सन्तो न निद्रां निद्राकृतबन्धस्वामित्वं स्वप्नं द्विविधभ्रमहेतुत्वं च नैव तुरीये पश्यन्ति जानन्तीत्यर्थः ॥ १४ ॥

एवंविधतुरीयस्य दर्शनप्राप्ती कदा भवेतामित्यत्राऽऽह—

अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ १५ ॥

अन्यथा गृह्णतो देहगेहादौ भगवदधीने स्वाधीनतां जानतः स्वप्नो भवति । स्वप्नपदेन मिथ्याज्ञानरूपभ्रमपरम्पराग्रहणतस्तत्त्वं भगवतः स्वातन्त्र्यादिरूपं तत्त्वमजानतो निद्रामूलाविद्याबन्धो भवति । तयोर्निद्राभ्रमयोर्विपर्यास आवर्तने क्षीणे सति तुरीयं पदं चतुर्थरूपमश्नुते साक्षात्कारद्वारा प्राप्नोतीत्यर्थः ॥ १५ ॥

निद्राभ्रमयोरावर्तनक्षयः केन स्याद्यस्य क्षयेण भगवदपरोक्षधीरित्यतो भगवत्प्रसादेनैवेत्याह—

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ १६ ॥

मायाशब्देन भगवदिच्छा तदधीनाऽविद्या च गृह्यते । अनादीतितन्त्रम् । अनादेर्विष्णोरनादिमायया कर्मरूपाविद्यया सुप्तः स्वापितः संसारे निवेशितो जीवो यदाऽनादिमायया भगवदिच्छया भगवत्प्रसा-

देन प्रबुध्यते भगवानेव स्वतन्त्रोऽन्यत्सर्वं तदधीनमित्यादितत्त्वज्ञानवान्भवति तदाऽजं जननादिदोषहीनमनिद्रमस्वप्नं विश्वादिरूपत्रयव्यापारप्रवर्तकमद्वैतं मिथ्याज्ञाननिवर्तकमिदमुपलक्षणं सर्वानिष्टनिवर्तकं भगवन्तं बुध्यते साक्षात्करोति ॥ १६ ॥

ननु देहगेहादौ स्वस्वामिसंबन्धादिरूपबन्धस्य जीवस्वरूपस्येव स्वाभाविकत्वेन निवृत्त्ययोगाद्विपर्यासे तयोः क्षीण इत्युक्तिः कथमित्यतो नायं स्वाभाविक इत्याह—

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १७ ॥

देहगेहादौ स्वस्वामिसंबन्धादिरूपो बन्धः प्रपञ्चस्वातन्त्र्येण नास्त्येव यदि पराधीनोऽपि विद्यत इत्यङ्गी क्रियेत तर्ह्यपि परमार्थतः परमश्चासावर्थश्च परमार्थ उत्तमोऽर्थो भगवांस्तस्मात्परमार्थतः परमेश्वरप्रसादादिति यावत् । निवर्तेत निवर्तत एव न संशयः । अनादितोऽनुवृत्तस्य देहादौ स्वीयत्वज्ञानरूपभ्रमस्य कथं निवृत्तिरित्यत आह—मायेत्यादि । अद्वैतं महद्भिर्यथावत्तया ज्ञातं ब्रह्मादिवस्तुजातमज्ञैर्द्वैतं द्वितीयेन प्रकारेण ज्ञातं तद्विपरीत्येन ज्ञातं तच्च मिथ्याज्ञानं तेषां मायामात्रं भगवदिच्छया मात्रं निर्मितं जातमित्यर्थः । तथा च तादृशमिथ्याज्ञानस्यानादितोऽनुवृत्तस्यापीश्वरेच्छया जातत्वेनास्वाभाविकत्वात्तत्प्रसादेन तन्निवृत्तिर्युक्तेति भावः । उक्तं हि संसारबन्धस्थितिमोक्षहेतुः । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ [ गी० ७।१४ ] इत्यादिकम् ॥ १७ ॥

उक्तमेव पूर्ववाक्यार्थं विशदयन्नुपसंहरति ।

विकल्पो न निवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥ इति ।

इत्यथर्ववेदीयमाण्डूक्योपनिषदि द्वितीयः खण्डः ॥ २ ॥

विकल्प इति देहगेहादौ स्वीयताभिमानादिनानात्मकबन्धरूपो विकल्प उक्तरीत्या स्वाभाविको यदि केनचिदज्ञानादिना प्रकारेण

---

आनन्दाश्रमस्थपुस्तके— १ विनिवर्तेत ।

स्वाभाविकत्वेन कल्पितस्तर्ह्यपि उपदेशान्महतामुपदेशबलान्न निवर्तेतापि तु निवर्तेतैव। कः सतां वादः। यदुपदेशान्नानाविधस्वातन्त्र्यादिभ्रमनिवृत्तिरित्यत आह—ज्ञात इति। ब्रह्मणि यथावज्ज्ञाते सति द्वैतं शिषमद्वैतमित्यत्रोक्तव्युत्पत्त्या मिथ्याज्ञानं न विद्यते निवर्तत इत्ययं सत्संवाद इत्यर्थः। इतिशब्दस्येत्येते श्लोका भवन्तीति पूर्वेणान्वयः॥ १८॥

इत्यथर्ववेदीयमाण्डूक्योपनिषत्प्रकाशिकायां द्वितीयः खण्डः॥ २॥

---

एवं समग्रोंकारप्रतिपाद्यस्याऽऽत्मनो विश्वादिरूपचतुष्टयं निरूप्य तेषां रूपाणामकारादिप्रणवांशप्रतिपाद्यत्वादिमाहात्म्यं वक्तुमुक्तमनुवदति—

सोऽयमात्माऽध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा
मात्राश्च पादा अकार उकारो मकार इति॥ १॥
जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्ते-
रादिमत्त्वाद्वाऽऽप्नोति ह वै सर्वान्कामानादिश्च
भवति य एवं वेद॥ २॥

ओमित्याक्रियमाणतयोंकारशब्दितः सोऽयं चतुरात्मकत्वेनोक्त आत्माध्यक्षरं सर्वतोऽधिकं च तदक्षरमविनाशि चेत्यध्यक्षरम्। शब्दस्वाभाव्यान्नपुंसकता। कीदृशमक्षरमित्यत आह—अधिमात्रमिति। अधिका मात्रा अंशा यस्य तदक्षरमधिमात्रम्। मात्राः का इत्यत आह—पादा मात्रा इति। पद्यन्त इति पादा विश्वादिरूपाणि। पादाः क इत्यतोऽकारादिप्रतिपाद्या विश्वादय इत्याह—अकार इति। अ इत्याक्रियत आहूयते प्रतिपाद्यत इत्यकारो विश्वः। एवमुक्तदिशा। उकारस्तैजसो मकारः प्राज्ञः। उपलक्षणमिदं नादबोध्यस्तुरीयोऽपि नाद इति शेषोक्त्या ग्राह्यः। एते विश्वतैजसप्राज्ञतुरीयाः पादा मात्राशब्देनाधिमात्रमित्यत्रोक्ता इत्यर्थः॥ १॥

अवर्णप्रतिपाद्यं रूपं स्थानोक्त्या निर्दिशति—जागरितेति। अकारः, अ, इत्याक्रियमाणः प्रथमा मात्रा प्रणवप्रतिपाद्यस्याक्षरस्य प्रथमांश इत्यर्थः। अत्र जागरितस्थानः प्रथमा मात्रा वैश्वानर इत्यवर्णप्रतिपाद्यत्वं विधीयत इति न पौनरुक्त्यमिति ध्येयम्। एवमग्रेऽपि। वैश्वानरस्यावर्णवा-

च्यत्वे निमित्तद्वयमाह—आप्तेरादिमत्त्वाद्वेति। तत्तज्जीवयोग्यभोग्यविषयान्भोगायाऽऽपयति प्रापयति। विश्व इति। अ इत्युच्यते विश्व इति। आप्लृ व्याप्तावन्तर्णीतण्यर्थाड्डुप्रत्यये अ इति रूपमिति भावः। प्राज्ञस्तैजसश्चाऽऽप्ती अस्येति आप्तिमांस्तस्माद्वा अ इत्युच्यत इत्यर्थः। सुषुप्तौ स्वप्ने च प्राज्ञतैजसाभ्यामेकीभूतो विश्वः सुप्तेरुत्थाने प्राज्ञात्स्वप्नादुत्थाने च तैजसाद्विविक्तः सन्दक्षिणाक्षिस्थानमायातीति तयोरादितया विश्वस्य तदादिमत्त्वमिति भावः। एतन्निमित्तद्वययुक्तत्वेनावर्णवाच्यत्वं विश्वस्य जानतः फलमाह—आप्नोति ह वा इति। योऽधिकारि एवमकारवाच्यत्वं विश्वस्य वेद सोऽस्येति शेषः। स वैश्वानरोऽस्य वेदितुः सर्वान्स्वयोग्यसर्वान्कामानाप्नोति प्रापयति। अन्तर्णीतणिच्। आदिश्च विश्व एवं वेदितुरादिश्च भवति। आविर्भूतस्वरूपतया मुक्तरूपेण तत उत्पद्यते तज्ज्ञानीति तस्यायमादिः कारणं भवतीत्यर्थः। यद्वा। आदिश्चेत्यत्रैवास्येति शेषः। आप्नोतीत्यत्र तु स ज्ञानीति शेषो ध्येयः॥ २॥

अथ द्वितीयपादमाह—

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षा-
दुभयत्वाद्वोत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति
नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ ३॥

स्वप्नस्थानो द्वितीया मात्राऽऽत्मनो द्वितीयांशस्तैजस उकार इत्याक्रियमाणत्वादुकार इत्युक्तः। उवर्णवाच्यत्वे निमित्तद्वयमाह—उत्कर्षादुभयत्वाद्वेति। जाग्रद्दशायां विद्यमानदेहाभिमानादृत्याज्यदेहाभिमानं त्याजयित्वा स्वप्नमण्डले जीवं कर्षतीत्युत्कर्षणाद्धेतोर्वा बाह्यज्ञप्तिरूपनिद्रां वासनामयविषयानुभवं च प्रयच्छतीत्युभयहेतुत्वाद्वा निमित्तादु इत्युच्यते तैजस इत्यर्थः। तथा वेदितुः फलमाह—उत्कर्षति हवा इति योऽधिकारि एवं निमित्तद्वययुक्ततयोकारवाच्यतैजसं वेद स ज्ञानी ज्ञानसंततिं ज्ञानधारां ज्ञाननित्यत्वमिति यावत्प्राप्नोतीत्यनुषङ्गः। उत्कर्षति देहबन्धादात्मानमुत्कर्षति उद्धरति उत्कृष्य च समानश्च मानमन्तर्गतिरिति स्मृत्युक्तेर्मानसहितः समानः सर्वमोक्षिणामन्तर्गतो मध्यगतो भवतीत्यर्थः। दोषाभावात्प्रीत्या चेति भावः। अस्य ज्ञानिनः कुलेऽब्रह्मविन्न भवति ब्रह्मज्ञानिसंततिरेव भवतीत्यर्थः॥ ३॥

कस्तृतीयः पादः कथमस्य मकारत्वं किंच तज्ज्ञानिनः फलमित्यतस्तत्सर्वं क्रमादाह—

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा
मितेरपीतेर्वा मिनोति ह वा इदꣳ
सर्वमपीतिश्च भवति य एवं वेद ॥ ४ ॥

सुषुप्तस्थानस्तृतीया मात्राऽऽत्मनस्तृतीयोंऽशः। मकारः। म इत्याक्रियमाणः। कुतो मितेरपीतेर्वा स्वात्मनि जीवमन्तर्गमयतीति स्वान्तर्गमनहेतोर्वा वृत्तिज्ञानस्यापीतेरप्ययशब्दितलयकरणाद्वा म इत्याक्रियत इत्यर्थः। योऽधिकारि एवं निमित्तद्वययुक्तत्वेन मकारवाच्यं प्राज्ञं वेद स ज्ञानीदं सर्वं यथायोग्यं जगन्मिनोति स्वान्तर्गमयति जीवानामणुत्वेऽपि अधिकारिणः सूर्यादेरिव प्रकाशतो व्याप्तिरस्तीति तन्मध्येऽन्तर्गमयति मुक्तः सन्निति भावः। अपीतिश्च भवति अप्ययकृच्च भवति दुःखाद्यनिष्टस्येत्यर्थः ॥ ४ ॥

एवं रूपत्रयं प्रणवस्याकारादिवर्णत्रयप्रतिपाद्यमुक्त्वा चतुर्थं रूपममात्रश्चतुर्थ इत्यादिनाऽग्रे विवक्षुः प्रागुक्तरूपत्रयज्ञानिनो यानि फलान्युक्तानि तत्र ब्रह्मदृष्टश्लोकान्प्रणयति—

अत्रैते श्लोका भवन्ति ।

अत्र रूपत्रयज्ञानिफल एते वक्ष्यमाणाः श्लोकाः संवादिनो भवन्ति। क्रमेण तान्मन्त्रान्पठति—

विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।
मात्रासंप्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ १९ ॥

अत्वविवक्षायामिति। विवक्षापदेनोपासनं ग्राह्यम्। आदिमत्त्वाद्वेत्यत्रोक्तदिशाऽऽदिमत्त्वनिमित्तेन प्रणवैकदेशावर्णवाच्यत्वोपासनायां सत्यामुपासकस्याऽऽदिसामान्यमादिश्चेत्यत्रोक्तदिशाऽऽदिमत्त्वसामान्यमादित्वेन विश्वसाम्यं भवत्युत्कटं स्पष्टमेतत्। यथा यथोपासते स तदेव भवतीत्यादेरिति भावः। मात्रासंप्रतिपत्तावात्मनोऽशो विश्व आप्तिनिमित्तप्रणवांशाकारार्थ इति विश्वरूपांशध्याने ध्यातुराप्तिसामान्यमेव स्यात्सर्वकामावाप्त्यैव विश्वसाम्यतैव भवेदित्यर्थः ॥ १९ ॥

तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम् ।
मात्रासंप्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥ २० ॥

तैजसस्योत्वविज्ञाने प्रागुक्तरीत्योत्कर्षनिमित्तेन प्रणवैकदेशोकारवाच्यत्वोपासनायां तस्योपासकस्योत्कर्षतीत्यत्रोक्तदिशा स्फुटमुत्कर्षो दृश्यते प्रमित इत्यर्थः । मात्रासंप्रतिपत्तौ प्रागुक्तदिशोभयहेतुत्वनिमित्तेन प्रणवांशोकारवाच्यत्वेनाऽऽत्मांशतैजसध्यानेन तस्य ध्यातुस्तथाविधं प्रागुक्तं ज्ञानसंततिरूपं समानत्वं चेत्युभयत्वं स्यादित्यर्थः ॥ २० ॥

मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासंप्रतिपत्तौ तु लयसामान्यमेव च ॥ २१ ॥

प्राज्ञस्य मकारभावे मकारत्वे प्रागुक्तमितिरूपनिमित्तेन प्रणवैकदेशमकारवाच्यत्वे विज्ञाते सति मानसामान्यं सर्वान्तर्भावरूपप्राज्ञसाम्यमुत्कटं स्फुटमित्यर्थः । मात्रासंप्रतिपत्तौ बाह्यादिज्ञानलयकृत्वनिमित्तेन प्रणवांशमकारवाच्यत्वेनाऽऽत्मांशप्राज्ञध्याने ध्यातुर्लयसामान्यं दुःखादिलयकृत्त्वेन प्राज्ञसाम्यमेव वा स्यादित्यर्थः ॥ २१ ॥

विश्वादिरूपाणामत्वोत्वमकारभावज्ञानिनो यदादिसामान्यादिफलमुक्तं तद्वाढ्यार्य विश्वादेरत्वादिज्ञानिन आदिसामान्यादिकं फलमिति यो जानाति तस्याप्यस्ति फलमित्याह—

त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितम्[1] ॥
स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ २२ ॥

त्रिषु धामसु त्रिषु रूपेषूक्तविधया ध्यातेषु सत्सु ध्यातुः पुरुषस्य यत्तुल्यं धेयं विश्वादिसादृश्यमादिमत्त्वादिसामान्यं भवतीति निश्चितं यथा तथा वेत्ति स वेदिता महामुनिः सर्वभूतानां पूज्यो वन्द्यश्च भवतीत्यर्थः ॥ २२ ॥

विश्वादिरूपोपासनायाः सर्वकामाप्त्यादिफलमुक्तं प्राक् । इदानीं विश्वादिप्राप्तिरूपफलं चाऽऽह—

अकारो नयते विश्वमुकारश्चापि तैजसम् ॥
मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिः ॥ २३ ॥

इत्यथर्ववेदीयमाण्डूक्योपनिषदि तृतीयः खण्डः ॥ ३ ॥

---

१ आनन्दाश्रमस्थपुस्तके—निश्चितः ।

अ इत्याक्रियमाणो विश्वः स्वात्मोपासकं विश्वं स्वात्मानं नयति प्रापयति । उकारश्चापि तैजसमित्यादौ नयत इत्यनुकर्षः । प्राग्वद्व्याख्या । पुनः प्राज्ञमिति पुनःशब्दः प्रत्यहं सुप्तौ प्राप्तिसत्त्वेऽपि स्थानविशेषे मुक्तौ तत्प्राप्त्यभिप्रायेणेति ज्ञेयम् । तुरीयोपासकस्य कथमित्यतस्तस्यापि तत्प्राप्तिरस्तीत्याह—नामात्र इति । अमात्रेऽनंशे विश्वतैजसयोः प्राज्ञेन प्रतिदिनमेकीभावो विश्वस्यास्तीति मात्रत्वं तुरीयस्य तन्नेत्यमात्र इत्युच्यते तुरीयः । अमात्रे चतुर्थेऽगतिस्तत्प्राप्त्यभावस्तदुपासकस्य न विद्यते विद्यत एव गतिरित्यर्थः । तुरीयेऽस्ति गतिरिति वक्तव्येऽगतिर्न विद्यत इत्युक्तिर्विश्वादेरिव बाह्यादिव्यवहारकारणत्वं न विद्यते यथा तथा गम्यत्वमपि नेति शङ्कायां तन्निरासार्थमिति ज्ञेयम् ॥ २३ ॥

इत्यथर्ववेदीयमाण्डूक्योपनिषत्प्रकाशिकायां तृतीयः खण्डः ।

---

नान्तःप्रज्ञमित्यादिनोक्तं तुरीयगुणानुवादपूर्वं तुरीयस्य नादप्रतिपाद्यत्वमाह—

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः
शिवोऽद्वैत एवमोंकार आत्मैव संवि-
शत्यात्मनाऽऽत्मानं य एवं वेद ॥ १ ॥

अमात्रोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतश्चतुर्थ इत्यनुवादः । ओंकारः । प्रणवैकदेशनादप्रतिपाद्यत्वं विवक्षितम् । अमात्र इत्यादिपदानां प्रागुक्तरीत्याऽर्थो बोध्यः । अदृष्टमव्यवहार्यमित्यादिना प्रागुक्तस्याव्यवहार्यत्वादेः पुनरत्रानुवादोऽव्यवहार्यत्वादिकमुपासकेऽपि समं मुक्ताविति प्रदर्शनायेति ज्ञेयम् । यथा विश्वादीनामकारादिवाच्यत्वमेवमोंकारैकदेशनादवाच्यत्वं तुरीयस्येत्यर्थः । नादप्रतिपाद्यत्वेन तुरीयोपासकस्य फलमाह—आत्मेति । योऽधिकार्येवममात्रत्वाव्यवहार्यत्वादिनोंकारमोंकारैकदेशनादप्रतिपाद्यं वेद जानाति स आत्मैव सञ्शुद्धस्वरूप एव सन्देहगेहादावन्यत्र ममताद्यभिमानत्यागी भूत्वेति यावत् । आत्मना परमात्मना तत्प्रसादेनेति यावत् । आत्मानं नादबोध्यं तुरीयात्मानं संविशति प्रविशति । प्रविश्य बहिरन्तः स्वेच्छया स्वयोग्यभोग्यान्भुञ्जानः सुखमास्त इति भावः ॥ १ ॥

प्रणवावयवाकारादिप्रतिपाद्यभगवद्रूपज्ञानमन्यस्मरणत्यागेन संपाद्य-मित्यत्र मन्त्रान्ब्रह्मद्रष्टानाह—

अत्रैते श्लोका भवन्ति ।

अत्रेत्युक्तार्थम् ।

ओंकारं पादशो विद्यात्पादा मात्रा न संशयः ।
ओंकारं पादशो ज्ञात्वा न किंचिदपि चिन्तयेत् ॥ २४ ॥

ओंकारमोमित्याक्रियमाणं समग्रप्रणवप्रतिपाद्यं पादशः पादैः पद्यन्ते प्राप्यन्ते स्वोपासकैरिति पादैर्विश्वाद्यंशैर्विद्याद्विश्वादिचतूरूपात्मना जानीयात् । पादाः किंरूपा इत्यत आह—पादा मात्रा इति । प्रणवांशभूताकारादिप्रतिपाद्या इत्यर्थः । ओंकारं प्रणववाच्यं पादशश्चतूरूपतया ज्ञात्वा किंचिदपि न चिन्तयेत् । इतरचिन्तया जायमानफलस्य ततोऽधिकफलस्य चतज्ज्ञानादेव सिद्धेरिति भावः ॥ २४ ॥

संसारभयं तितीर्षुणोंकारो भगवान्सर्वथा ध्येय इत्यत्र श्लोकं पठति—

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ॥
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ २५ ॥

प्रणवे हरौ चेतो मनो युञ्जीत तद्विषयं कार्यम् । स कीदृशः प्रणव इत्यत आह—प्रणवो ब्रह्मेति । गुणैर्बृंहणत्वात्पूर्णत्वाद्विश्वादिरूपचतुष्टयात्मकः प्रणवो निर्भयं ब्रह्म गुणपूर्णमिति विश्वादिचतूरूपो हरिर्जाग्रदाद्यवस्थाप्रणयनात्प्रणव इत्युच्यते । प्रपूर्वान्नयतेरच्प्रत्यये धातोर्नुशब्दादेशगुणावादेशणत्वेषु प्रणव इति सिद्धिः । फलमाह—प्रणवे नित्ययुक्तस्येति तस्मिन्प्रणवे हरौ नित्ययुक्तस्य नित्यं तद्ध्यायिन इत्यर्थः । क्वचित्केनापि निमित्तेनेत्यर्थः । फलसाम्यार्थमेव प्राङ्निर्भयमिति विशेषणोक्तिः ॥ २५ ॥

विश्वादिरूपाणामन्योन्यं मूलरूपेण च न गुणतारतम्यमित्याह—

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ २६ ॥

अपरमपरः पूर्वतनो मूलरूपपूर्वावतारात्मा प्रणवो हरिर्ब्रह्म पूर्णं हि

प्रसिद्धमेतत् । 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इत्यादाविति भावः । परः पश्चात्तनो विश्वाद्यवताररूपः प्रणवो हरिश्च ब्रह्म पूर्ण इत्याकर्षः । स्मृतः श्लोकद्वष्टेति योज्यम् । पूर्वावतारे पश्चिमावतारे च पूर्णतैव न क्वचिदपि न्यूनतेति भावः । प्रणवो ब्रह्मेत्युक्तं पूर्णत्वं व्यनक्ति—अपूर्व इति । न विद्यते पूर्वं कारणं यस्य सोऽपूर्वः प्रणवः कारणहीनः । नाशाभावादनन्तरः । अन्तशब्दपर्यायोऽत्रान्तरशब्दः । सर्वगतत्वाद्बाह्यः । पराधीनस्थित्यभावादनपरः । अव्ययः शश्वदेकप्रकारः ॥ २६ ॥

सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ॥
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ २७ ॥

प्रणवो हरिः सर्वस्याऽऽदिः कारणं मध्यं स्थितिकर्ता तथा नाशकर्ता च । एवेति निश्चये । ज्ञानिनः फलमाह—एवं ब्रह्मत्वादिना प्रकारेण प्रणवं हरिं ज्ञात्वा तदनन्तरं प्रारब्धभोगानन्तरं तद्ब्रह्म व्यश्नुते विशेषेण प्राप्नोति सदा सत्त्वेऽपि स्थानादिविशेषाभिप्रायेण वीत्युक्तिः ॥ २७ ॥

प्रणवस्य हरेर्महिमान्तरमाह—

प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् ॥
सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति ॥ २८ ॥

ईश्वरं सर्वनियामकम् । प्रणवं हरिं सर्वस्य हृदि संस्थितं विद्यादुपासीत । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । तमेव शरणं गच्छ [ गी० १८।६१ ] इति स्मृतेरिति भावः । एवं सर्वव्यापिनमोंकारमोमित्याक्रियमाणं मत्वोपास्य धीरो ज्ञानी न शोचति । आविर्भूतापहतपाप्मत्वादिगुणाष्टको मुच्यत इत्यर्थः ॥ २८ ॥

एवमुक्तां समस्तव्यस्तप्रणवाभिधेयभगवदुपासनामनुवदंस्तज्ज्ञानिनः स्तवेनोपसंहरति—

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः । ओंकारो
विदितो येन स मुनिर्नेतरो जनः स मुनिर्नेतरो जनः॥२९॥

इत्यथर्ववेदीयमाण्डूक्योपनिषदि तुरीयः खण्डः ॥ ४ ॥

---

अमात्रः । मात्रा अंशास्तद्विहीनोऽमात्रः । मूलरूपेण स्थित इति यावत् । अनन्तमात्रः । जगद्व्यापारनिर्वहणार्थमिच्छाकृतविश्वाद्यनन्तांशः । इच्छागृहीताभिमानोरुदेह इति स्मृतेः । द्वैतस्योपशमः । स्वोपासकानां सर्वानिष्टनिवर्तकः । शिवः । निर्दुःखसुखरूपः । ओंकारः । ओमित्याक्रियमाणः । एवंरूपो येन विदितो ज्ञातः स मुनिर्नेतरः किंतु स जनो जननमरणादिना परिवर्तत इत्यर्थः । मुनिस्तु मुच्यत इति भावः । स मुनिर्नेतरो जन इति द्विरुक्तिरुक्तसर्वप्रमेयावधारणार्था । उपनिषत्समाप्त्यर्था च ॥ २९ ॥

इत्यथर्ववेदीयमाण्डूक्योपनिषत्प्रकाशिकायां
तुरीयः खण्डः ॥ ४ ॥

---

## समाप्तेयं माण्डूक्योपनिषत् ।

ॐ तत्सद्ब्रह्मणे नमः ।

रङ्गरामानुजविरचितप्रकाशिकोपेता

# तैत्तिरीयशाखान्तर्गताऽऽनन्दवल्ल्युपनिषत् ।

---

अथ परमतत्त्वहितपुरुषार्थप्रतिपादिका तैत्तिरीयशाखास्थाऽऽनन्दवल्ली व्याख्यायते—

ॐ ब्रह्मविदाप्नोति परम् ।

निरतिशयबृहत्त्वाश्रयवस्तूपासकः सर्वेभ्यः परमुत्कृष्टं ब्रह्म प्राप्नोतीत्यर्थः । 'आवृत्तिरसकृदुपदेशात्' [ब्र० सू० ४।१।१] इत्यधिकरणोक्तन्यायेन वेदनोपासनादिशब्दानामेकार्थत्वाद्ब्रह्मविदित्यत्र विच्छब्द उपासनपरः । तत्क्रतुन्यायेन प्राप्यस्यैवोपास्यत्वात् । ब्रह्मविदाप्नोति परमिति परस्य ब्रह्मणः प्राप्यत्वकथनात्तस्यैवोपास्यत्वमिति द्रष्टव्यम् ।

अत्र ब्रह्म, तद्वेदनं, प्राप्तिः, प्राप्यं चेति चतुष्टयमुक्तम् । किं तद्ब्रह्म कीदृशं तद्वेदनं कीदृशी प्राप्तिः कीदृशं च प्राप्यमित्याकाङ्क्षायां मन्त्रमुखेण विवरितुं मन्त्रमवतारयति—

तदेषाऽभ्युक्ता ।

तद्ब्रह्माभिमुखीकृत्यैषर्गध्येतृभिरुक्ता । ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः । एवमेव हि मान्त्रवर्णिकसूत्रे भाषितम् ।

सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं
गुहायां परमे व्योमन् । सोऽश्नुते
सर्वाकामान्सह ब्रह्मणा विपश्चितेति ।

तत्र जन्मादिसूत्रे 'यतो वा इमानि' इत्यादिकारणवाक्येन प्रतिपन्नजगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते— सत्यं ज्ञानमनन्तं ब्रह्मेति । तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माऽऽह । तेन विकारास्पदमचेतनं संसृष्टचेतनश्च व्यावृत्तः । नामान्तरभजनार्हावस्थान्तरयोगेणैतयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह । तेन कदाचित्संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात्स्वरूपस्य

स्वरूपेण गुणैश्चानन्तं तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः। विशेषणानां व्यावर्तकत्वादिति भाषितम्। नन्वत्र ज्ञानपदस्य विषयावगाहिज्ञानत्वं प्रवृत्तिनिमित्तं चेत्स्वरूपस्यातादृक्त्वाज्ज्ञानगुणकत्वमित्यर्थः पर्यवस्येत्। न तु स्वरूपस्य ज्ञानत्वम्। स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत्स्वरूपस्य ज्ञानत्वमात्रं सिध्येत्। न तु ज्ञानगुणकत्वम्। न चेष्टापत्तिः। 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'[ब्र०सू० २।३।२९]इति सूत्रे यथा सत्यं ज्ञानमिति ब्रह्मणो ज्ञानगुणसारत्वाज्ज्ञानमिति व्यपदेश इति भाष्यं विरुध्येतेति चेदुच्यते। स्वप्रकाशत्वमेव प्रवृत्तिनिमित्तं तत्र ज्ञानत्वाश्रयत्वमसंकोचात्स्वरूपतो गुणतश्च सिध्यति। ब्रह्मशब्दात्प्रतीयमानं बृहत्त्वं यथा स्वरूपतो गुणतश्च सिध्यति। तद्वदिति व्यासार्यैरुक्तम्। वस्तुतस्तु सत्यं ज्ञानमित्यस्यान्तोदात्तत्वादर्शआद्यजन्तत्वेन ज्ञानगुणकत्वमेवार्थः। 'प्रज्ञानघन एवाऽऽनन्दमयः' इति श्रुत्यन्तराद्ब्रह्मणो ज्ञानस्वरूपत्वमस्तीति द्रष्टव्यम्। इहेदं नान्यत्रेति परिच्छेत्तुमशक्यत्वं। देशापरिच्छेदः। इदमिदानीं नान्यदेतिपरिच्छेदायोग्यत्वं कालापरिच्छेदः। इदमिदं नेतिपरिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामानाधिकरण्यार्हत्वरूपं वस्त्वपरिच्छेदः। यद्वा वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः। यथा तुल्यकालत्वेऽपि तुल्यपरिमाणत्वेऽपि दशवर्णसुवर्णापेक्षया कलधौतादेरपकर्षः। तद्राहित्यं वस्त्वपरिच्छेदः। समाभ्यधिकराहित्यनिदानभूतैर्गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेद इत्युक्तं भवतीति व्यासार्यैर्व्याख्यातम्। नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यत इति स्मरणाद्गुणानन्त्यमनन्तशब्दार्थः। अत्र रूढिवशाद्देवताविशेषनिर्णयः। नचानन्तपदस्य नारायणवाचिनः पुंलिङ्गत्वं स्यादिति वाच्यम्। इष्टापत्तेः। तस्य द्वितीयान्तत्वेन पुंलिङ्गत्वस्येष्टत्वात्। द्वितीयान्तत्वाभावे च 'यो वेद निहितं गुहायाम्' इत्यत्र तच्छब्दस्याध्याहारप्रसङ्गात्। अनध्याहारेणोपपत्तावध्याहारस्यान्याय्यत्वात्। अत्रानन्तपदयौगिकार्थस्य त्रिविधपरिच्छेदराहित्यस्य नारायणादन्यत्राप्रसक्त्या श्रीपत्यादिशब्देष्विव न रूढिः कल्पनीयेत्युच्येत तदाऽपि न क्षतिः। तत्र 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनेन ब्रह्मशब्दार्थो विवृतः। हृदयगुहानिहितत्वप्रकारकज्ञानप्रतिपादकेन 'यो वेद निहितं गुहायाम्' इत्यनेन विच्छब्दार्थ उक्तः। 'परमे व्योमन्। सोऽश्नुते' इत्यनेनाऽऽप्नोति-

शब्दार्थ उक्तः । परमेव्योमन्नप्राकृताकाशशब्दिते परमपद इत्यर्थः । 'सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इत्यनेन प्राप्यमुक्तम् । काम्यन्त इति कामाः कल्याणगुणाः । मुक्तस्य सर्वविषयविरक्तस्य तद्व्यतिरिक्तकाम्यान्तरासंभवात् । 'अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' [ छा० ८ । १ । ६ ] इत्यादौ कामशब्दस्य कल्याणगुणेष्वेव प्रयोगात् । विविधं पश्यन्ती चिद्यस्येति बहुव्रीहिः । निरुपाधिकानन्याधीनासंकुचितसर्वविषयकज्ञानवत्त्वं विपाश्चित्त्वम् । अयं च गुणो नित्यमुक्तादिव्यावर्तकः । ब्रह्मापेक्षयाऽपि तद्गुणानां फलदशायां प्राधान्यं प्रतिपादयितुं ब्रह्मणा सहेति निर्देशः । 'सहयुक्तेऽप्रधाने [ पा० सू०२ । ३ । १९ ] इति पाणिनिस्मृतिः । न च भोग्यतायां गुणापेक्षया ब्रह्मणोऽप्राधान्यं दोषायेति शङ्क्यम् । श्रियं त्वत्तोऽप्युच्चैर्वयमिह प्रणामः शृणुतरामित्यादिवत्परमात्मापेक्षया तत्कल्याणगुणानां भोग्यतातिशयप्रतिपादनस्य परमात्मातिशयपर्यवसायित्वेनैतादृशाप्राधान्यस्य गुणत्वेन दोषत्वाभावात् । अत एव हि पुत्रेण सहौदनं भुङ्क्ष इतिवद्भोक्तृसाहित्यपरत्वे ब्रह्मणोऽप्राधान्यप्रसङ्गात्तत्परित्यज्य पयसा सहौदनं भुङ्क्ष इतिवद्भोग्यसाहित्यपरत्वमेव । नात्र च पक्षे ब्रह्मणोऽप्राधान्यं दोषायेति भोग्यसाहित्यपक्ष एव भगवता भाष्यकृता समाश्रितः । ननु 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' [ जै० २ । १।३५ ] इति जैमिनिनाऽर्थवशाधीनपादव्यवस्थावत्त्वस्यर्ग्लक्षणतयोक्तत्वात्सहेत्यस्य पादान्तरस्थस्य ब्रह्मणेति पादान्तरस्थेनान्वयो न समीचीनो भवति ततश्च ब्रह्मणेति न सहयोगे तृतीया । अपि त्वित्थंभूतलक्षणे तृतीया । सहेत्यस्य च युगपदित्यर्थः । सर्वान्कामान्युगपदनुभवति ब्रह्मणा ब्रह्मरूपोपलक्षितः सन्नित्यर्थः । ब्रह्मभूत इति यावत् । अत एव स्कान्दे—

सोऽश्नुते सकलान्कामानक्रमेण सुरर्षभाः ।
विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ॥

इत्युपबृंहितमिति चेन्न । तेषामृग्यत्रार्थवशेनेत्यस्योपलक्षणमात्रत्वात् । उपलक्षणत्वपक्षमभ्युपगम्यैव तद्व्याख्यातृभिरप्यर्थवशेन वर्ग्वशेन वा पादव्यवस्थेति व्याख्यातत्वाच्च । अभियुक्तानां मन्त्रप्रसिद्धिविषयत्वं मन्त्रत्वमितिवदृक्पदप्रसिद्धिविषयत्वमेवक्त्वं , ततश्च पादान्तरस्थेनापि पादान्तरस्थपदान्वयो युक्तः । ब्रह्मणेत्यस्येत्थंभूतलक्षणत्वाश्रयणे

ब्रह्मभूत इत्यर्थोऽपि न संभवति । श्वेतच्छत्रेण राजेत्यादौ तथाऽभेदादर्शनात् । त्वदुक्तस्कान्दवचनस्य पूर्वैः संप्रतिपन्नैरनुदाहृतत्वाच्च भाष्यकृदुक्त एवार्थः । इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः ।

सत्यं ज्ञानमनन्तमित्युक्तं वस्त्वपरिच्छेदलक्षणमानन्त्यं सर्वोपादानत्वसर्वान्तरत्वमुखेन प्रपञ्चयति—

तस्माद्वा एतस्मादात्मन आकाशः संभूतः ।

तस्मादित्यनेन ब्रह्मविदाप्नोति परमित्यव्यवहितब्राह्मणोक्तः परामृश्यते । एतस्मादिति सत्यं ज्ञानमनन्तमित्यव्यवहितमन्त्रोक्तं परामृश्यते । ततश्च मन्त्रब्राह्मणोक्तादेव तस्मादात्मन आकाश उत्पन्न इत्यर्थः ।

आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी ।

'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' [ छा० ६।२।३ । ४ ] इति तेजःप्रभृतिष्वीक्षणादिश्रवणादाकाशवायुतेजआदिशब्दास्तत्तच्छरीरकपरमात्मपरा इति 'तेजोऽतस्तथा ह्याह' [ ब्र० सू०२।३ । १० ] इत्यधिकरणे स्थितम् ।

पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः ।

शरीरमित्यर्थः । शिष्टं स्पष्टम् ।

स वा एष पुरुषोऽन्नरसमयः ।

स वा एष पुरुषोऽयं देहोऽन्नरसस्य परिणामः । 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसम्' [छा०६।५।१] इत्याद्युक्तरीत्या जाठराग्निपच्यमानान्नसारांशनिर्वर्त्यैर्मांसादिमयत्वाच्छरीरस्येति भावः ।

तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ।

तस्य देहरूपस्य पुरुषस्येदं प्रत्यक्षतो दृश्यमानमेव शिरः । बाहुद्वयं पक्षौ । अधस्ताद्ग्रीवाया नाभेरूर्ध्वं परिदृश्यमानोऽयं मध्यमो देहभागोऽङ्गानामात्मा । 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतेः । धारकत्वेन प्रधानभूत इत्यर्थः । इदं नाभेरधस्तात्परिदृश्यमानं चरणद्वयं पुच्छवदाधारत्वात्पुच्छमित्यर्थः । अत्र पुरुषशब्दितमनुष्यपाण्यादेः पक्षत्वादि[नि]रूपणं प्रतिपत्तिसौकर्यार्थमिति द्रष्टव्यम् ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

तत्तस्मिन्नेवार्थे ब्राह्मणोक्तेऽयं मन्त्ररूपश्लोकोऽपि भवतीत्यर्थः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां प्रथमोऽनुवाकः॥ १ ॥

---

अन्नाद्वै प्रजाः प्रजायन्ते याः काश्च पृथिवीꣳ श्रिताः ।
अथो अन्नेनैव जीवन्ति अथैतदपियन्त्यन्ततः ॥

पृथिव्यां वर्तमानाः सर्वाः प्रजा अन्नादेवोत्पद्यन्ते । उत्पन्नाश्चान्नेनैव जीवन्ति । अन्तकाले तत्रैव लयं यान्तीत्यर्थः ।

अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते ।

सर्वभूतोपकारकत्वादन्नमेव ज्येष्ठम् । अत एवाशनायादिव्याधिनिवर्तकत्वात्तदेव सर्वौषधमुच्यत इत्यर्थः । ओषधीभ्योऽन्नमित्योषधिपरिणामित्वं निमित्तीकृत्यान्ने प्रयुक्तमोषधीशब्दं भेषजत्वनिमित्ततया श्रुतिर्व्यपदिशतीति द्रष्टव्यम् ।

सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते ।

अन्ने ब्रह्मदृष्टिं कुर्वन्तो यावदपेक्षितमन्नं प्राप्नुवन्तीत्यर्थः ।

ब्रह्मदृष्टिहेतुभूतं ब्रह्मसाम्यमाह—

अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते ।

ब्रह्मणोऽपि सकलरोगनिवर्तकतया सर्वभेषजत्वस्य सत्त्वादिति भावः ।

अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते ।

जननवृद्धिहेतुत्वमन्नब्रह्मणोः सममित्यर्थः ।

अन्नशब्दस्य निर्वचनमाह—

अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति ।

जीवनदशायां स्वयमद्यते । नाशदशायामलभ्यमानतया वा विपरीत-

परिणामहेतुतया वा 'अन्नं मृत्युं तमु जीवातुमाहुः' इतिश्रुत्युक्तरीत्याऽत्तृत्वलक्षणं संहर्तृत्वं द्रष्टव्यम्। एवमाकाशादेरन्नमयस्य स्थूलशरीरपर्यन्तस्य मन्त्रब्राह्मणोदितब्रह्मोपादनकत्वमात्मन आकाश इत्यात्मशब्दश्रवणात्। तदन्तर्यामिकत्वं चोक्तं भवति। एवमाकाशादेरन्नमयशब्दितस्थूलशरीरपर्यन्तस्य ब्रह्मैवाऽऽत्मोपादानं चेत्युक्त्वा स आत्मा क इत्यपेक्षायामानन्दमय एव स आत्मेति दर्शयितुं स्थूलारुन्धतीन्यायेन स्थूलदेहान्तर्वर्तिनं प्राणमयमात्मत्वेन दर्शयति। सूक्ष्मारुन्धतीं दर्शयितुं प्रवृत्तः प्रथमत एव सूक्ष्मायाः अरुन्धत्याः प्रदर्शनासंभवं पर्यालोच्य तत्समीपवर्तिनीं स्थूलतारकामियमेवारुन्धतीति दर्शयति। तस्यां स्थूलतारकायां श्रोतुररुन्धतीत्वबुद्धौ धृतायां तत्समीपवर्तिनीं वस्तुतोऽरुन्धतीं सूक्ष्मामियमेवारुन्धतीति दर्शयति। सोऽयं स्थूलारुन्धतीन्याय इत्यर्थः।

तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः।

देहान्तर्वर्ती देहादन्यो यः प्राणमयः स एवाऽऽत्मन आकाशः संभूत इत्याकाशादिसर्वोपादानत्वेन तदन्तर्यामित्वेन च निर्दिष्ट आत्मेत्यर्थो भगवता भाष्यकृता 'अन्वयादिति चेत्स्यादवधारणात्' [ब्र०सू०३।३।१७] इति सूत्रेऽन्नमयादन्तरे प्राणमये प्रथमं परमा[त्म]बुद्धिरवतीर्णा तदनन्तरं च प्राणमयादन्तरे मनोमये ततो विज्ञानमये तत आनन्दमय इति भाषितम्। अत्र पञ्चवृत्तेः प्राणस्य प्राणनवृत्तिप्रचुरत्वात्प्राणमयत्वम्।

तेनैष पूर्णः।

तेन प्राणमयेनाऽऽत्मनाऽयमन्नरसमय आत्मा पूर्ण इत्यर्थः। व्याप्त इति यावत्। सर्वस्यापि देहस्य प्राणव्याप्तत्वादिति भावः।

स वा एष पुरुषविध एव।

प्राणमयोऽपि पुरुषाकृतिरेवेत्यर्थः।

हस्तपादादिमत्त्वेन पुरुषविधत्वभ्रान्तिं व्युदस्यति—

तस्य पुरुषविधताम्। अन्वयं पुरुषविधः।

तस्यान्नमयस्य पुरुषविधत्वमनुकृत्य प्राणमयोऽपि पुरुषविध इत्यर्थः। ततश्च तद्वदेव शिरःपुच्छादिमत्तया पञ्चविध इत्यर्थः।

तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः।

स्पष्टोऽर्थः ।

आकाश आत्मा ।

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महानितिस्मृत्युक्तरीत्या वायुविकारभूतप्राणापानादिधारकत्वादाकाशस्याऽऽत्मत्वम् ।

पृथिवी पुच्छं प्रतिष्ठा ।

पृथिव्यामाकाशस्य प्रतिष्ठितत्वादस्याः पुच्छत्वम् ।

तदप्येष श्लोको भवति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां द्वितीयोऽनुवाकः ॥ २ ॥

---

प्राणं देवा अनु प्राणन्ति मनुष्याः पशवश्च ये ।

देवमनुष्यपशवः प्राणमनुप्राणन्ति प्राणाधीनजीवना इत्यर्थः ।

प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते ।

यस्मात्सर्वेषां भूतानां यावच्छरीरे प्राणो वसति तावदायुरिति प्राणस्योच्छ्वासनिश्वासादिलक्षणसर्वभूतायुर्हेतुत्वम् । अत एव सर्वेषामायुरित्युच्यत इत्यर्थः ।

सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते ।

एवंलक्षणे प्राणे ब्रह्मदृष्टिं कुर्वन्तः सर्वमायुः प्राप्नुवन्तीत्यर्थः ।

एवं प्राणमय आकाशाद्यन्नमयान्तस्याऽऽत्मत्वबुद्धिमवतार्य बुद्धिं निवर्तयति—

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।

पूर्वस्यान्नमयस्याऽऽत्मैष एव तस्य प्राणमयस्याऽऽत्मेत्यर्थः । शारीरः शरीरसबन्ध्यात्मेत्यर्थः । अनेनाऽऽत्मशब्दस्य स्वरूपार्थभ्रान्तिर्व्युदस्ता भवति । ततश्चान्नमयप्राणमयावेकात्मकौ नत्वन्नमयस्य प्राणमय आत्मेत्यर्थः । तर्ह्यन्नमयप्राणमययोः क आत्मेत्याकाङ्क्षायामाह—

तस्माद्वा एतस्मात्प्राणमयात् ।

अन्योऽन्तर आत्मा मनोमयः ॥

अत्र मनोमय इत्यत्र प्राचुर्यार्थे मयट् । मनोबुध्यहंकारचिन्ताख्यान्तःकरणवृत्तिषु मनोवृत्तेः प्राचुर्यात् ।

तेनैष पूर्णः । स वा एष पुरुषविध एव ।

तस्य पुरुषविधताम् । अन्वयं पुरुषविधः ।

पूर्ववदर्थः ।

तस्य यजुरेव शिरः ।

तस्यान्तःकरणस्य यजुर्वेदविषयज्ञानजनकमनोव्यापारः शिर इत्यर्थः । मुख्यार्थस्य यजुर्वेदस्य मनःसंबन्धाभावेन मनसः शिरोरूपणासंभवादिति द्रष्टव्यम् । एवमुत्तरत्रापि ।

ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः ।

आदेश आत्मा ।

इदं कुर्विदं मा कार्षीरिति विधिनिषेधरूपं रहस्यानुशासनमादेश इत्यर्थः । अत्र तज्जन्यज्ञानहेतुभूतान्तःकरणवृत्तिरादेशशब्देनोच्यते ।

अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ।

अथर्वाङ्गिरसा दृष्टा मन्त्राः प्रतिष्ठाहेतुभूतं पुच्छमित्यर्थः । अत्रापि अथर्वाङ्गिरःशब्दस्तज्जन्यज्ञानहेतुभूतमनोव्यापरपरः ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां तृतीयोऽनुवाकः ॥ ३ ॥

---

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।

आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति ।

यस्माद्ब्रह्मानन्दाद्वाङ्मन [ सानी ] यत्तालक्षणं पारमप्राप्य निवर्तन्ते तादृशं ब्रह्मानन्दं 'दृश्यते त्वग्र्यया बुध्या' 'मनसा तु विशुद्धेन' इत्युक्तरीत्या शुद्धेन मनसा ज्ञात्वा कदाऽपि न बिभेतीत्यर्थः । अत्र ब्रह्मानन्दस्य विशुद्धमनोगोचरत्वप्रतिपादकत्वादस्य श्लोकस्य मनोविषयत्वमस्तीति द्रष्टव्यम् ।

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।

पूर्वस्य प्राणमयस्य य आत्मा स एव मनोमयस्याऽऽत्मेत्यर्थः । एवं चान्नमयप्राणमयमनोमयानामेक आत्मेत्युक्तं भवति ।

स क इत्यपेक्षायामाह—

तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः ।

अत्र विज्ञानमयो जीवो न बुद्धिमात्रं मयट्प्रत्ययेन व्यतिरेकप्रतीतेः ।

तेनैष पूर्णः । स वा एष पुरुषविध एव ।

तस्य पुरुषविधताम् । अन्वयं पुरुषविधः ।

पूर्ववदर्थः ।

तस्य श्रद्धेव शिरः । ऋतं दक्षिणः

पक्षः । सत्यमुत्तरः पक्षः ।

अत्र श्रद्धर्तसत्यशब्दा ज्ञानविशेषपराः ।

योग आत्मा ।

'ब्रह्मणे त्वा महसे ' ओमित्यात्मानं युञ्जीतेति विहितज्ञानविशेषो योगशब्देनोच्यते ।

महः पुच्छं प्रतिष्ठा ।

योगविरोधिनिरसनसामर्थ्यलक्षणं महः पुच्छमित्यर्थः । एतेषां श्रद्धादीनामात्मगुणत्वेन सिद्धत्वात्तदवच्छिन्नमात्मस्वरूपं शिरःपक्षपुच्छादितया प्रतिपाद्य[त] इति द्रष्टव्यम् । अतः स्वस्मादनतिरिक्तैः स्वावयवैशिरःपक्षपुच्छादिरूपणपरत्वात्प्रकरणस्येति भाष्यस्य न विरोधः ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये

चतुर्थोऽनुवाकः ॥ ४ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां चतुर्थोऽनुवाकः ॥ ४ ॥

---

विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च ।

अत्र विज्ञानमयशब्दोदितो जीवो विज्ञानशब्देनोच्यते । आत्मस्वरू-

पस्य स्वप्रकाशतया ज्ञानैकनिरूपणीयत्वेन विज्ञानशब्देनाभिधानसंभवात्। कृत्यल्युटो बहुलमिति वा जानातीत्यर्थे ल्युडाश्रीयते। नन्द्यादित्वं वाऽऽश्रित्य नन्दिग्रहीत्यादिना कर्तरि ल्युराश्रीयते। तेन विज्ञानमात्रपरामर्शे यज्ञं तनुते कर्माणि तनुतेऽपि चेतिप्रतिपादितलौकिकवैदिककर्मकर्तृत्वासंभवादन्तर्यामिब्राह्मणे य आत्मनि तिष्ठन्निति माध्यंदिनपाठगतात्मशब्दस्थाने यो विज्ञाने तिष्ठन्निति काण्वपाठदर्शनाद्विज्ञानशब्दो जीवात्मपरः।

विज्ञानं देवाः सर्वे। ब्रह्मज्येष्ठमुपासते।

सर्वे देवा विज्ञानं जीवस्वरूपमेव प्रधानशब्दाभिलप्यादचेतनाद्ब्रह्मणोऽपि ज्येष्ठं प्रजापतिविद्योक्तरीत्योपासत इत्यर्थः।

विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति।
शरीरे पाप्मनो हित्वा। सर्वान्कामान्समश्नुत इति।

यस्तु विज्ञानरूपं ब्रह्म वेद तस्माच्च जीवादन्तिमप्रत्ययपर्यन्तं न प्रमाद्यते चेच्छरीरे पाप्मनो हित्वा देहे वर्तमान एव विनष्टाश्लिष्टपूर्वोत्तराघः सर्वान्कामान्समश्नुते।

तस्यैष एव शारीर आत्मा। यः पूर्वस्य।
तस्माद्वा एतस्माद्विज्ञानमयात्। अन्यो-
ऽन्तर आत्माऽऽनन्दमयः। तेनैष पूर्णः। स वा
एष पुरुषविध एव। तस्य पुरुषविधताम्।
अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः।
मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः।
आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।

इष्टवस्तुदर्शनजन्यं सुखं प्रियम्। तल्लाभजन्यं सुखं मोदः। लब्धस्योपयोगजन्यं सुखं प्रमोदः। सुखातिशय आनन्दः। न च मध्यकायत्वेन रूपितस्याऽऽनन्दस्य पुच्छत्वेन रूपितब्रह्मणश्च भेदाभावेन तस्यैवाऽऽत्मत्वेन पुच्छत्वेन च रूपणं कथमिति वाच्यम्। एकस्यैव ब्रह्मणो ब्रह्मरूपत्ववेषेण पुच्छत्वमानन्दत्वेन वेषेणाऽऽत्म[श]ब्दितमध्यकायत्वमित्युपपत्तेः। न चाऽऽनन्दरूपब्रह्मस्वरूपस्य कथमानन्दप्रचुरत्वलक्षणमानन्दमयत्व-

मानन्दस्याऽऽनन्दमयत्वाभावादिति वाच्यम् । आनन्दस्वरूपस्यैव ब्रह्मणः प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षतारूपितधर्मभूतानन्दप्रचुरत्वेनाऽऽनन्दमयत्वस्याप्युपपत्तेः । अत्र च पूर्वेष्वन्नमयादिषु पर्यायेषु निरूपितस्य ब्रह्मणोऽवयवत्वस्यास्मिन्नानन्दपर्याये निरूपणं ब्रह्मविदाप्नोति परमित्युपक्रान्तस्य ब्रह्मोपदेशस्याऽऽनन्दमयपर्याये समानमिति ज्ञापनार्थमिति द्रष्टव्यम् । ततोऽत्राऽऽनन्दमय एव प्रक्रान्त एव ब्रह्म ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां पञ्चमोऽनुवाकः ॥ ५ ॥

---

असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति ।

पूर्वेषु चतुर्षु पर्यायेषूदाहृतानां श्लोकानां पुच्छवद्विषयत्वदर्शनादयमपि श्लोकः पुच्छवदानन्दमयविषय एव न तु ब्रह्मपुच्छमिति निर्दिष्टतदेकदेशविषयः । ततश्च ब्रह्मशब्देनाऽऽनन्दमय एवोच्यते । आनन्दमयसदसत्त्वज्ञानान्मोक्षसंसारौ भवत इत्यर्थः ।

आनन्दमयरूपस्य ब्रह्मण आकाशादिविज्ञानमयान्तपदार्थान्तर्यामितया निर्दिष्टस्याप्यात्मान्तरं नास्ति किमिति शङ्कां व्युदस्यति—

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।

विज्ञानमयान्तपदार्थस्याऽऽत्मभूत एवाऽऽनन्दमय आत्मा तस्याऽऽनन्दमयस्याऽऽत्मेत्यर्थः । ततश्चानन्यात्मकत्वमुक्तं भवति । न च पूर्वेषु पर्यायेषु तस्यैष एव शारीर आत्मेत्यस्यानन्यात्मकत्वप्रतिपादकत्वादर्शनादस्मिन्पर्याये तदाश्रवणेऽर्थवैरूप्यं स्यादिति शङ्क्यम् । पूर्वेषु पर्यायेष्वनुक्तस्य ब्रह्मावयवत्वस्येह निरूपणात्तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मेति निर्देशाभावाच्चैतत्पर्यायस्य तस्यैष एव शारीर आत्मेत्यस्यानन्यात्मत्वमेवार्थः ।

आनन्दमयब्रह्मप्रतिपादनानन्तरं ब्रह्मविदाप्नोति परमित्युपक्रमाभिहितमाप्तिविशदीकरणार्थं प्रश्नानुपक्षिपति—

अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं
प्रेत्य । कश्चन गच्छति । आहो विद्वा-
नमुं लोकं प्रेत्य । कश्चित्समश्नुते ।

पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतःशब्देनोच्यते । उतेति निपातस्यच्छान्दसो दीर्घः । अविद्वानिति पदे सत्याद्युदात्तत्वं स्यात् । तत्पुरुषे तुल्यार्थ० [ पा० सू० ६।२।२ ] इति स्मरणात् । अन्तोदान्तं चेदं पदम् । उताविद्वानितिच्छेदः । अविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्नं च ब्रह्मोपासीनो विद्वान्किमितः प्रेत्यामुं लोकं परमे व्योमन्नित्युक्तं लोकं गच्छतीत्येकः प्रश्नः । उत गत्यनपेक्षमिहैव ब्रह्माऽऽप्नोतीत्यर्थसिद्धः प्रश्नः । आहो विद्वान्कश्चित्समश्नुत इति भोक्तृत्वं विवक्षितम् । अयमर्थः—यः कश्चिदहंग्रहेणोपासीनोऽपि विद्वानमुं लोकं गत्वा किं कश्चित्समश्नुते भोग्यभूतं ब्रह्मानुभवतीत्येकः प्रश्नः । उत ब्रह्मस्वरूपेणैकी भवतीत्यर्थसिद्धः प्रश्नः । एवं शास्त्रवैविध्यमूलागतिविशेषस्वरूपभेदसदसद्भावविषयाः प्रश्ना बहुवचनविवक्षिताः । एतत्सर्वं व्यासार्यैरुपासात्रैविध्यादिति सूत्रे स्पष्टमुक्तम् । एतान्प्रति वक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव ब्रह्मणः प्राप्यत्वादिज्ञापनायाऽऽह—

सोऽकामयत बहु स्यां प्रजायेयेति ।

स आनन्दमय आनन्दमय आत्मा देवमनुष्यादिरूपेण बहु स्यां तदर्थमाकाशादिभूतरूपेण प्रजायेयेति व्यष्टिसमष्टिरूपचेतनाचेतनविषयसंकल्पमकरोदित्यर्थः ।

स तपोऽतप्यत ।

स परमात्मा स्रष्टव्यालोचनरूपं तपः कृतवानित्यर्थः । तप आलोचन इति धातुः ।

स तपस्तप्त्वा । इदꣳ सर्वमसृजत । यदिदं
किंच । तत्सृष्ट्वा । तदेवानुप्राविशत् ।

ननु सर्वदा सर्वव्याप्तस्य ब्रह्मणः कोऽसौ सृष्टिकालानुप्रवेश इति

---

१ आनन्दाश्रमस्थपुस्तके—°छती ३ । आ° । २ °भूता ३ उ ।

चेदुच्यते । गोजठरगतवत्से गोत्वादिवत्सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेष एवानुप्रवेशः । अनेन सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायामिति मन्त्रोक्तमनन्तस्य ब्रह्मणो हृदयगुहानिहितत्वमुपपादितं भवति ।

तदनुप्रविश्य । सच्च त्यच्चाभवत् ।

सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते । त्यच्छब्देन पूर्वपूर्वावस्थात्यागिविकारास्पदमचेतनमुच्यते । ब्रह्मैव चेतनाचेतननामरूपभाग्भवतीत्यर्थः ।

ननु ब्रह्मण एव सर्वोपादानतया सर्वभावे विकारास्पदत्वं स्यादित्याशङ्क्याऽऽह—

निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च ।

जातिगुणक्रियावत्तया जातिगुणाभिधायिशब्दवाच्यमचेतनं निरुक्तम् । जातिगुणादिकशून्यं चेतनजातमनिरुक्तम् । एता भूतमात्राः प्रज्ञामात्रास्वर्पिता इत्युक्तरीत्याऽचेतनवर्गाधारभूतं चेतनजातं निलयनमाश्रितमचेतनजातं त्वनिलयनम् ।

विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् ।

अजडस्वरूपं जडस्वरूपं च निर्विकारतया सत्यत्वं चेतनस्येतरस्य त्वतथात्वम् । निरुक्तत्वनिलयनत्वविज्ञानत्वयुक्तसत्यानृतशब्दितचेतनाचेतननामरूपभाग्भवदपि ब्रह्म सत्यमेवाभवत् । अजहन्निर्विकारत्वलक्षणस्वस्वभावमेवाभवदित्यर्थः ।

यदिदं किंच तत्सत्यमित्याचक्षते ।

यस्माच्चेतनाचेतनात्मकवर्गानुप्रविष्टतया सत्यशब्दितस्य ब्रह्मण आत्मत्वमत एव सर्वमपि चेतनाचेतनात्मकं जगच्छास्त्रदृष्टिमन्तः पुरुषाः पराशरादयः, 'हरेर्न किंचिद्व्यतिरिक्तमस्ति ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्याचक्षत इत्यर्थः ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां षष्ठोऽनुवाकः ॥ ६ ॥

---

व्यक्तोऽर्थः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां षष्ठोऽनुवाकः ॥ ६ ॥

---

असद्वा इदमग्र आसीत् । ततो वै सदजायत ।

इदं स्थूलं चेतनाचेतनशरीरकं ब्रह्मानभिव्यक्तनामरूपं ब्रह्म सृष्टेः प्रागासीत् । तस्मादिदं जगदभिव्यक्तनामरूपमभवदित्यर्थः । नन्वसच्छब्दितस्य ब्रह्मण उपादानत्वे कर्त्रन्तरमपेक्षितं निमित्तोपादानयोर्भेदावश्यंभावादित्याशङ्क्याऽऽह—

तदात्मानꣳ स्वयमकुरुत ।

अन्तरा[त्मा]नमेवोपादानत्वेन स्वीकृत्य स्वयमेवाकुरुत ।

तस्मात्तत्सुकृतमुच्यत इति ।

यस्मात्स्वयमेव स्वस्य कार्यमत एव ब्रह्म सुकृतं सुष्ठु कृतं कार्यं यस्य तत्सुकृतं कार्यस्य सौष्ठवं चानतिक्लेशरूपत्वम् । स्वभिन्नस्य कार्यस्य निर्माणे हि क्लेशप्रसक्तिः । ततश्च 'अक्लिष्टकार्यं ब्रह्मेति निश्वसितमेतन्महतो भूतस्य' [बृ० ४।२।१०] इत्यादिश्रुतयो वदन्तीत्यर्थः । भवतु तत्सुकृतं तस्योपास्यत्वप्राप्यत्वयोः किमायातमित्यत्राऽऽह—

तद्वै तत्सुकृतम् । रसो वै सः ।

सुकृतमिति निर्दिष्टं ब्रह्म रस आनन्दः ।

रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति ।

तल्लाभादस्याऽऽनन्दित्वं ततश्च तस्याऽऽनन्दस्य प्राप्यत्वात्प्राप्यस्योपास्यत्वे युक्ते इति भावः ।

तदेवोपपादयति—

को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽऽनन्दयाति ।

यद्ययमपरिच्छिन्नानन्दरसः परमात्मा न स्यात्सांसारिकमापवर्गिकं वा सुखं कः प्राप्नुयात् । अत एष ह्येवाऽऽनन्दयति । अतस्तस्य सर्वविधानन्दहेतुत्वात्तस्य प्राप्यत्वमस्तीति भावः ।

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽ-
निरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्द-
ते । अथ सोऽभयं गतो भवति ।

अदृश्ये चक्षुरादिग्रहणानर्हे । आत्म्यं व्याप्यं शरीरमित्यर्थः । अनात्म्येऽशरीर इत्यर्थः । अत एवानिरुक्ते जातिगुणादिवाचिदेवादिपदावाच्ये । अनिलयने । आधारशून्ये । अभयमभयाय । 'नाव्ययीभावात्' [पा० सू० २ । ४ । ८३] इति चतुर्थ्या अम्भावः । अर्थाभावे यदव्ययमित्यव्ययीभावः समासः । अभयसाधनभूतां प्रतिष्ठां निरन्तरस्मृतिलक्षणां निष्ठां यो विन्दते लभते सोऽभयं प्राप्नोति । अत्र व्यासार्यैरदृश्य इत्यचिद्व्यावृत्तिः । अनात्म्य इति बद्धव्यावृत्तिः । तेषां हि परमात्मना व्याप्यत्वम् । यद्वाऽऽत्म्यं व्याप्यं कर्मकृतं शरीरं तद्रहितोऽनात्म्यः । अनिरुक्त इति मुक्तव्यावृत्तिः । स हि बद्धावस्थायां देवादिशब्दैरुक्तः । अनिलयन इति नित्यमुक्तव्यावृत्तिः । तेषां हि भगवानाधार इत्युक्तम् ।

एवं विहितायाः प्रतिष्ठाया विच्छेदेऽनर्थं दर्शयति—

यदा ह्येवैष एतस्मिन्नुदरमन्तरं
कुरुते । अथ तस्य भयं भवति ।

एष उपासकः । एतस्मिन्परमात्मनि ध्यानस्यान्तरं विच्छेदमुरमल्पमपि यः कुरुते तस्य भयमुद्भवतीत्यर्थः । पूर्ववाक्ये प्रतिष्ठाशब्देन निरन्तरध्यानवाचिना ध्यानगतनैरन्तर्यस्य विहितत्वादत्रान्तरशब्देनापि तस्यैव ध्यानगतनैरन्तर्यस्य विरोधिनो ध्यानविच्छेदस्य ग्रहणमुचितं न तु परोक्तरीत्या ब्रह्मण्यन्तरं भेदं यः कुरुते जानातीत्यर्थ उचित इति द्रष्टव्यम् । वस्तुतस्तु ब्रह्मैक्यवादिनामस्माकं ब्रह्मणि नानात्वनिषेधो न प्रतिकूलः । अस्माभिर्नानाब्रह्मवादस्यानभ्युपगमात् । तथाऽपि प्रकरणानुगुण्यादुक्त एवार्थ उचित इति द्रष्टव्यम् ।

किं भयं तत्राऽऽह—

तत्त्वेव भयं विदुषोऽमन्वानस्य ।

विदुषो ब्रह्मोपासननिष्ठस्य तदतिरिक्तविषयस्पृहया निरन्तरं मननमकुर्वतस्तदेवामननं भयं न हि तदपेक्षयाऽन्यद्भयमस्ति । उक्तं च महर्षिभिः—

यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥
वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥ इति ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां सप्तमोऽनुवाकः ॥ ७ ॥

---

भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ।

अग्नीन्द्रसूर्यप्रमुखाः सर्वेऽपि देवप्रवराः परमात्मशासनातिवृत्तौ किं भविष्यतीति भीत्या स्वकर्मसु जागरूका भवन्ति । अतश्च ब्रह्मव्यतिरिक्तं कृत्स्नमपि परं दुःखोदर्कत्वादनर्थरूपमेव। ततश्च तादृशपदकामनया मननविच्छेदस्यात्यन्तभयावहत्वात्ततोऽपि न भयं किंचिदस्तीत्यर्थः ।

एवं ब्रह्मवेदनस्य जगत्कारणत्वतदौपयिकसार्वज्ञ्यादिगुणविशिष्टविषयकत्वमविच्छिन्नत्वं च विधाय प्राप्यस्याऽऽनन्दमयस्य ब्रह्मण आनन्दमयशब्दप्रवृत्तिनिमित्तमानन्दप्राचुर्यं दर्शयति—

सैषाऽऽनन्दस्य मीमाꣳसा भवति ॥

वक्ष्यमाणानन्दविषयकविचारो भवतीत्यर्थः ।

युवा स्यात्साधुयुवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः ।

अत्र व्यासार्यैः, साधुयुवाऽध्यायकः। साधु यथाविधि सम्यक्संप्रदा-

सिद्धतया स्वरवर्णविभ्रंशरहितं वा । युवशब्देन प्रत्यग्रत्वं विवक्षितम् । अविस्मरणं नित्यं नवं यथा भवति तथाऽध्ययनवानित्यर्थः । यद्वा समवयस्कानां सर्वेषामध्यापकस्तदधिकज्ञान इत्यर्थः । आशिष्ठ आशुतरक्षिपः । यद्वा । अशनक्षमोऽरोग इत्यर्थः । यद्वा । आशीर्वादविषयभूतसर्वानुरञ्जक इत्यर्थः । सर्वान्द्वेषान्नमस्यन्तीति वत् । द्रढिष्ठ इति । शरीरबलस्योक्तत्वात् । यद्वा द्रढिष्ठो दृढतरो न त्वव्यवस्थितस्वभाव इत्यर्थः । बलिष्ठः शारीरमानससर्वविधबलवान् । वित्तस्य पूर्णा वित्तेन पूर्णा । पूरणगुणसुहितार्थेति तृप्त्यर्थयोगे षष्ठ्या अनुज्ञानात् । एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा 'स एको मानुष आनन्दः' इति श्रुत्या तस्यैवाऽऽनन्दत्वमुक्तम् । न च ज्ञानभिन्नस्य गुणविभूत्यादेः कथमानन्दत्वमिति शङ्क्यम् । अनुकूलत्वं ह्यानन्दत्वं तच्च स्वत एवेष्टत्वं तच्च गुणविभूत्योरपि संभवति तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुरूपत्वमेवेत्यन्वयव्यतिरेकसिद्धम् । अतः श्रुतिस्वारस्याद्गुणविभूत्यादेरानन्दत्वम् । श्रोत्रियो ब्रह्मनिष्ठोऽकामहतः समस्तसांसारिकभोगानुपहतोऽतो मुक्त इत्युच्यत इत्युक्तम् । एवं च युवत्वदृढगात्रत्वसौन्दर्यज्ञानबलैश्वर्याद्यः संभूय यत्र भवन्ति स एको मानुष आनन्दः । अकामहतश्रोत्रियस्य मुक्तस्यापि स आनन्दोऽस्ति मुक्तस्य सर्वानन्दानुभवशालितया तत्र मानुषानन्दस्यान्तर्गतत्वादिति भावः ।

ते ये शतं मानुषा आनन्दाः(१)। स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः (२) । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्म-

देवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्याऽऽनन्दः (३)। श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्याऽऽनन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य ॥ १० ॥

ये मनुष्या एव सन्तः कर्मविशेषेण विद्याविशेषेण वाऽन्तर्धानादिशक्त्युपेततया गन्धर्वत्वं प्राप्तास्ते मनुष्यगन्धर्वाः। अन्तरिक्षलोकवासिनो देवगन्धर्वाः। चिरकालावस्थायिलोकश्चिरलोकः। चिरलोको लोको येषां ते चिरलोकलोकाः पितरः। अजानो देवलोकः। तत्र जाता आजानजाः स्मार्तकर्मविशेषतो देवस्थानेषु जाता इत्यर्थः। अग्निहोत्रादिकर्मणाऽग्नीन्द्रादिसायुज्यं प्राप्ताः कर्मदेवाः। देवास्तु वसुरुद्रादयस्त्रयस्त्रिंशद्धविर्भुजः। इन्द्रबृहस्पती प्रसिद्धौ प्रजापतिश्चतुर्मुखः। न तु दक्षादयः। एकवचनश्रवणात्।

ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य (४)।

अत्र ब्रह्मशब्दो ब्रह्मविदाप्नोति परमिति प्रकृतब्रह्मपरः। न च ब्रह्मानन्दस्य ते ये शतमिति परिच्छिन्नत्वं कथमिति शङ्क्यम्। क्षणार्धेन बहूनि योजनानि गच्छति रवाविषुवद्गच्छति सवितेतीषुसाम्यप्रतिपादकवचनस्य हि मान्द्यनिवृत्तिपरत्ववत्ते ये शतमिति वाक्यस्यापि चतुर्मुखानन्दाधिक्यमात्रपरत्वेन शतगुणितचतुर्मुखानन्दान्न्यूनाधिकपरत्वाभावात्।

एवंभूतानन्दमयो यो वेद निहितं गुहायामिति हृदयगुहानिहित-

त्वेनोपास्यमानः कीदृशविग्रहविशेषविशिष्टः को वा देवताविशेष इत्याकाङ्क्षायामाह—

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ।

य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नामेति [ छा० १ । ६ । ६ । ७ ] आदित्यमण्डलान्तर्वर्तिकमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः स एव हृदयगुहावर्तिविज्ञानमयादन्तरः । ततश्च पुण्डरीकाक्षत्वादिविग्रहयुतो नारायण एवेत्यर्थः । ततश्च तादृशविग्रहविशिष्टत्वेन हृदयगुहावर्तिनो भगवतो ध्यानं कर्तव्यमिति फलितार्थः । अत्र सच्च त्यच्चाभवदिति चिदचिच्छरीरकत्वेनानुसंधानमुक्तं सत्यं ज्ञानमिति स्वरूपेणानुसंधानमुक्तं तच्च स्वरूपेणानुसंधानमादित्यमण्डलान्तर्वर्तिपुण्डरीकाक्षविग्रहविशिष्टतया चोक्तं भवतीति जीवमुख्यप्राणलिङ्गादिति चेन्नोपासात्रैविध्यादिति सूत्रे [ ब्र० सू० १ । १ । ३१ ] भगवता भाष्यकृता तदिदं त्रिविधं ब्रह्मानुसंधानं प्रकरणान्तरेष्वप्याश्रितम् । ' सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिषु स्वरूपेणानुसंधानम् । तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति भोक्तृशरीरतया भोग्यभोगोपकरणशरीरकतयाऽनुसंधानमित्युक्तम् ।

एवं प्राप्यस्य प्राप्यत्वोपयुक्तमुताविद्वानमुं लोकमित्यादिनोपक्षिप्तानां प्रश्नानामुत्तरमाह—

स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति ।

अस्माल्लोकात्प्रेत्येत्यनेन सर्वेषां ब्रह्मविदामर्चिरादिमार्ग उक्तो भवति । आनन्दमयमात्मानमुपसंक्रामतीति मुक्तिदशायां जीवब्रह्मणोरुपास्योपासकयोर्भोक्तृभोग्यभावप्रतिपादनान्मुक्तौ ब्रह्मैक्यपक्षो व्युदस्तो भवति । एतमन्नमयमित्यादिपञ्चस्वपि पर्यायेष्वेतच्छब्दः परमात्मपरः । अन्नमयप्राणमयमनोमयविज्ञानमयशब्दास्तच्छरीरकपरमात्मपराः । अत्र व्यासार्थः सर्वोऽपि विद्वानस्माल्लोकात्प्रेत्यान्नमयादिसमष्टिव्यष्टिविभू-

तिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन्ननुभवतीति प्रश्नस्योत्तरमुक्तं भवतीत्युक्तं भवति। अभयं प्रतिष्ठां विन्दते।

अथ सोऽभयं गतो भवतीत्युक्तार्थे साक्षित्वेन श्लोकं पठति—

तदप्येष श्लोको भवति।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायामष्टमोऽनुवाकः ॥ ८ ॥

---

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति ॥

वाङ्मनसे आनन्दस्येयत्तालक्षणं पारं गन्तुं प्रवृत्ते तदप्राप्यैव निवृत्ते भवतः। तादृशानन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयात्यन्तिकनिवृत्तिर्भवतीत्यर्थः। तदेवोपपादयति—

एतꣳ ह वाव न तपति। किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति।

स्वर्गादिहेतुकं सुकृतं नाकार्षं नरकादिहेतुभूतं दुष्कृतमकार्षमितीदृशी चिन्तैतं ब्रह्मविदं न बाधते स्वर्गादिलोकेच्छाया अभावात्। ब्रह्मज्ञानदग्धपापतया नरकादिकस्याप्यभावात्।

एतादृशं ब्रह्मविद्याप्रयुक्तमाहात्म्यमपि ध्येयमित्याह—

स य एवं विद्वानेते आत्मानꣳ स्पृणुते।

एते एताभ्यां पुण्यपापाभ्यामात्मानं स्पृणुते रक्षतीत्यर्थः। पुण्यपापफलानुभवो नास्तीत्युक्तं भवति।

उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद।

पुनर्वचनं पुण्यपापविधूननध्यानसातत्यतात्पर्यद्योतनायानुवाकसमाप्तिद्योतनाय।

इत्युपनिषत् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये नवमोऽनुवाकः ॥ ९ ॥

इदं परमरहस्यरूपोपदेशयोग्यायैव वक्तव्यमिति भावः । इदं च प्रकरणं समन्वयाध्याये प्रथमपादे चिन्तितम्—'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' [ तै० २ । ५ ] इति श्रुत आमन्दमयो जीव एव । नित्यं वृद्धशरादिभ्यः [ पा० सू० १ । ४ । १४४ ] इति वृद्धानन्दाद्विकारार्थे मयट्प्रत्ययस्य विधानेनाविकारे परमात्मनि मयट्प्रत्ययार्थासंभवाच्छारीर इति शरीरसंबन्धश्रवणादन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः शुध्यन्तामित्यानन्दमयस्य शोध्यत्वश्रवणान्नित्यशुद्धस्य परमात्मनः शोध्यत्वासंभवादानन्दमयो जीव एवेति प्राप्त उच्यते—'आनन्दमयोऽभ्यासात् ।' [ ब्र० सू० १ । १ । १२ ] आनन्दमयः परमात्मा कुतोऽभ्यासात् । निरतिशयदशाशिरस्कतया ते ये शतमित्यभ्यस्यमानस्यापरिच्छिन्नानन्दस्य परिमितसुखलवभागिनि जीवेऽसंभवात् । विकारशब्दान्नेति चेन्न प्राचुर्यात् । विकारवाचिमयट्प्रत्ययश्रवणादानन्दमयो जीव इति चेन्नात्र विकारवाची मयट्प्रत्ययः । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः [ पा० सू० ४ । ३ । १४३ ] इति पूर्वसूत्रान्नित्यं वृद्धशरादिभ्यः [ पा० सू० ४ । ३ । १४४ ] इत्यत्र भाषायामित्यनुवृत्तेर्विकारावयवयोर्मयट्प्रत्ययस्य भाषाविषयत्वेन च्छन्दसि विकारार्थे मयटोऽसंभवात् । 'यस्य पर्णमयी' इत्यादौ तु 'द्व्यचश्छन्दसि [ पा० सू० ४ । ३ । १५० ] इति विधानबलादुपपद्यते । प्रकृते त्वानन्दपदस्य द्व्यच्त्वाभावेन न मयट्प्रत्ययसंभवः । अत आनन्दमय इत्यत्र मयट्प्रत्ययस्य 'तत्प्रकृतवचने मयट्' [ पा० सू० ५ । ४ । २१ ] इति सूत्रविहितत्वात्प्राचुर्यार्थमयट्प्रत्यय एव । अतश्चाऽऽनन्दप्रचुरत्वं परमात्मनः संभवतीति परमात्मैवाऽऽनन्दमयः । ननु ब्राह्मणप्रचुरो ग्राम इत्युक्ते तस्मिन्ग्रामेऽब्राह्मणानामप्यल्पानां सत्त्वं प्रतीयते । एवमिहापि ब्रह्मण आनन्दप्राचुर्ये कथितेऽनानन्दस्यापि लेशतः सत्त्वं प्रतीयत इति दुःखलेशशून्ये परमात्मन्यानन्दप्राचुर्योक्तिरपि न संभवतीति चेत् । नैवम् । प्रचुरप्रकाशः सवितेत्यत्र सवितुः प्रकाशप्राचुर्ये कथिते तद्विरोधितमोल्पत्वस्य तत्राप्रतीतेः । न हि सवितरि तमोलेशस्यापि संभावनाऽस्ति । अतस्तत्र यथा सवितरि प्रकाशप्राचुर्यं व्यधिकरणचन्द्रादिगतप्रकाशाल्पत्वापेक्षं न तु समानाधिकरणादित्यगततमोल्पत्वापेक्षम् । एवं ब्रह्मण्यानन्दप्राचुर्यमपि व्यधिकरणजीवगतानन्दाल्पत्वापे-

क्षमेव न तु समानाधिकरणब्रह्मगतस्वविजातीयदुःखाल्पत्वापेक्षमतो ब्रह्मण्यानन्दप्राचुर्ये नानुपपत्तिः । 'तद्धेतुव्यपदेशाच्च ।' [ ब्र० सू० १ । १ । १४ ] 'एष ह्येवाऽऽनन्दयाति' [ तै० २ । ७ ] इत्यानन्दमयस्य जीवानन्दयितृत्वं व्यपदिश्यते । अत आनन्दयितव्याज्जीवानन्दयिताऽन्य एव । 'मान्त्रवर्णिकमेव च गीयते' [ ब्र०सू०१।१।१५ ] 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोदितं ब्रह्मैव । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' [ तै० २ । १ ] इत्यादिनाऽऽकाशादिकारणत्वेनाऽऽनन्दमयत्वेन च गीयते । न च सत्यज्ञानत्वादिकं सविकारस्य संकुचितज्ञानस्य जीवस्य संभवति । ननु परिशुद्धस्वरूपस्य मन्त्रवर्णोदितसत्यज्ञानादिकं सविकारस्य संकुचितज्ञानस्य संभवतीति चेत्तत्राऽऽह—'नेतरोऽनुपपत्तेः ।' [ ब्र० सू० १ । १ । १६ ] इतरो मुक्तोऽपि जीवो नात्र प्रतिपाद्योऽनुपपत्तेः । निरुपाधिकेविपश्चित्त्वसकलजगत्कारणत्वभयाभयहेतुत्वादीनां प्रकरणप्रतिपादितानां धर्माणां परमात्मव्यतिरिक्तेऽनुपपत्तेः । 'भेदव्यपदेशाच्च ।' [ ब्र० सू० १ । १ । १७ ] 'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः' इति विज्ञानशब्दितबद्धमुक्तात्मकसकलजीवभेदव्यपदेशाच्च न मुक्तात्मेह प्रतिपाद्यः । 'कामाच्च नानुमानापेक्षा ।' [ ब्र० सू० १ । १ । १८ ] 'सोऽकामयत बहु स्यां प्रजायेयेति' [ तै० २ । ६ ] कामनामात्रादेवाऽऽनुमानिकप्रधाननिरपेक्षजगत्स्रष्टृत्वप्रतीतेर्न जीव आनन्दमयः । अस्मिन्नस्य च तद्योगं शास्ति । [ ब्र० सू० १ । १ । १९ ] अस्मिन्नानन्दमये लब्धे सत्यस्य जीवस्याऽऽनन्दयोगं 'रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' [ तै० २ । ७ ] इति शास्त्रं शास्ति । अतो जीवानन्दहेतुभूतलाभकर्मभूतस्य ब्रह्मणो न जीवाभेद उपपद्यते । ननु नाऽऽनन्दमयस्य ब्रह्मत्वमुपपद्यते 'ब्रह्मपुच्छं प्रतिष्ठेति' तदाधारभूततया तत्पुच्छत्वेन च निर्दिष्टस्यैव ब्रह्मत्वेनाभिधानात् । आनन्दमयस्यैव प्रधानप्रतिपाद्यत्वे 'असन्नेव स भवतीति' [ तै० २ । ६ ] तत्पर्यायोक्तश्लोकोऽप्यानन्दमयविषय एव स्यात् । न च तस्मिञ्श्लोक आनन्दमयस्य निर्देशो दृष्टः । तत्र ब्रह्मशब्दस्यैव श्रवणात् । अतः पुच्छमेव ब्रह्म नाऽऽनन्दमय इति चेन्न । आनन्दमयस्यैव ब्रह्मणः कयाचन भेदविवक्षयाऽवयवावयविभावेन निर्देशोपपत्तेः । इतरथाऽऽनन्द आत्मेति मध्यमावयवत्वेन निर्दिष्टस्याऽऽनन्दमयस्यापि पुच्छत्वेन निर्दिष्टब्रह्मणो भेदः प्रसज्येत । मध्यमावयवपुच्छयोर्भेदावश्यंभावात् । न चेष्टापत्तिः । ब्रह्मणोऽनानन्दरू-

पत्वप्रसङ्गात्। यदि च कयाचन भेदविवक्षयैकस्यैव ब्रह्मणः पुच्छत्वमध्यमाङ्गत्वनिरूपणं तर्ह्यवयवावयविभावभेदकल्पनमप्यभेदेऽपि संगच्छत इति नाऽऽनन्दमयब्रह्मणोर्भेदप्रसक्तिः। न चाऽऽनन्दमयस्य ब्रह्मत्व आनन्दमया मे शुध्यन्तामिति शोध्यत्वमनुपपन्नमिति वाच्यम्। शोध्यत्वस्य प्रसाद्यत्वरूपतया भक्तिप्रपत्तिलक्षणोपायवशेन शान्तकोपत्वलक्षणप्रसादविशिष्टत्वरूपेण साध्यत्वसंभवेन शोध्यत्वस्यापि संभवात्। आनन्दमयस्याब्रह्मत्वे चाऽऽनन्दमयोऽभ्यासादित्यादिसूत्रगणस्यासंबद्धप्रलापत्वं स्यादित्यास्तां तावत्। तथा गुणोपसंहारपादे यथा विद्यान्तरे श्रुतानां संयद्वामत्वादीनां न विद्यान्तर उपसंहारस्तथा तस्य ज्ञानत्वादीनामपि विद्याविशेषप्रकरणश्रुतानां न विद्यान्तर उपसंहारः प्रापकाभावादिति पूर्वपक्षे प्राप्त उच्यते—आनन्दादयः प्रधानस्य [ ब्र० सू० ३।३।११ ] गुणिनो ब्रह्मणः सर्वेषूपासनेष्वभेदाद्गुण्यपृथग्भूतानामानन्दादीनां गुणानामपि सर्वेषूपासनेषूपसंहारः। नन्वेवं तस्य प्रियमेव शिर इत्यादिषु श्रुतानां प्रियशिरस्त्वादिगुणानामपि सर्वेषूपसंहारः प्राप्नोति तत्राऽऽह—'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे' [ब्र० सू० ३।३।१२] प्रियशिरस्त्वादीनां ब्रह्मणो बुद्ध्युपारोहाय कल्पितत्वेन ब्रह्मगुणत्वाभावान्नोपासनान्तरे तस्य प्राप्तिः। यदि हि ब्रह्मणः शिरःपक्षपुच्छाद्यवयवभेदः स्यात्तर्हि ब्रह्मणो मध्यप्रदेश उपचयः शिरःप्रदेशेऽपचय इत्यादिकं पक्षिवत्प्रसज्येत। न चानन्तस्य ब्रह्मणस्तदुपपद्यते। ननु प्रियशिरस्त्वादीनां ब्रह्मगुणतया सर्वविद्योपसंहाराप्राप्तावपि संयद्वामत्वादीनां ब्रह्मगुणानां सर्वविद्यासूपसंहारः प्राप्नोति ब्रह्मगुणानामानन्त्येनोपसंहारोऽशक्यश्च तत्राऽऽह—'इतरे त्वर्थसामान्यात्।' [ब्र० सू० ३।३।१३] इतरे त्वानन्दादयोऽर्थसामान्याद्ब्रह्मस्वरूपावगतिलक्षणप्रयोजनैक्यात्सर्वासु परविद्यासूपसंहर्तव्याः। ततश्च स्वरूपनिरूपका धर्माः सत्यत्वज्ञानत्वानन्दत्वादयः सर्वासु परविद्यासूपसंहर्तव्याः। निरूपितस्वरूपधर्माः सत्यकामत्वादयो न सर्वासु विद्यासूपसंहर्तव्याः। ननु प्रियशिरस्त्वादीनां वस्तुतो ब्रह्मधर्मत्वाभावे तदुपदेशः किमर्थमित्यत्राऽऽह—'आध्यानाय प्रयोजनाभावात्'। [ब्र०सू०३।३।१४] आध्यानाय बुद्ध्यारोहाय प्रियशिरस्त्वादिरूपा उपदिश्यन्ते प्रयोजनान्तरस्याभावात्। 'आत्मशब्दाच्च' [ब्र० सू० ३।३। १५] 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयस्याऽऽत्मशब्देन निर्देशादात्मनश्च शिरःपक्षपुच्छाद्यसंभवात्प्रियशिरस्त्वादिकं बुध्यारोहाय

कल्पितमित्येवावसीयते । ननु 'अन्योऽन्तर आत्मा प्राणमयः' [तै० २।२] इत्यात्मशब्दस्यानात्मस्वपि पूर्वं प्रयुक्तत्वादन्योऽन्तर आत्माऽऽनन्दमय इत्यात्मशब्दस्याऽऽत्मविषयत्वं कथं निश्चीयते तत्राऽऽह—'आत्मगृहीतिरितरवदुत्तरात्' । [ ब्र० सू० ३।३।१६ ] अन्योऽन्तर आत्माऽऽनन्दमय इत्यत्राऽऽत्मशब्दस्य परमात्मन एव ग्रहणमितरवत् । यथेतरत्राऽऽत्मा वा इदमेक एवाग्र आसीत् । [ऐ० १।१] स ईक्षत लोकान्नु सृजा इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणं तद्वत् । कुत एतत् । उत्तरात् । सोऽकामयत बहु स्यां प्रजायेयेति आनन्दमयविषयादुत्तरवाक्यात् । 'अन्वयादिति चेत्स्यादवधारणात्' । [ ब्र० सू० ३ । ३ । १७ ] पूर्वत्र प्राणमयादिष्वात्मशब्दान्वयदर्शनान्नोत्तरान्निश्चेतुं शक्यत इति चेत्स्यादवधारणात्स्यादेव निश्चयः कुतोऽवधारणात् । पूर्वत्रापि 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' [ तै० २ । १ ] इति परमात्मन एव बुध्द्यामवधारितत्वात् । अन्नमयानन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा तदनन्तरं च प्राणमयानन्तरे मनोमये ततो विज्ञानमये तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिस्तदनन्तरभावात्तदुत्तराच्च सोऽकामयतेति वाक्यात्प्रतिष्ठितेत्युपक्रमेऽप्यपरमात्मबुध्द्या शब्दान्वय इति निरवद्यम् । न चाऽऽनन्दमयेऽपि परमात्मबुध्द्याऽऽत्मशब्दप्रयोगोऽस्त्विति शङ्क्यम् । तद्वदत्राऽऽत्मान्तरानुपदेशाद्बाधकाभावात् । नन्वितरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तिकाले सत्यत्वज्ञानत्वादीनां न प्रतीयमानत्वनियमः संभवति । अस्थूलत्वादिना वाऽन्तर्यामित्वजगत्कारणत्वलक्ष्मीपतित्वनिरुपाधिकसर्वज्ञत्वादिभिर्वेतरव्यावृत्तब्रह्मस्वरूपप्रतीतेः संभवात् । अत आनन्दादीनां सत्यकामत्वसंयद्वामत्वादीनां च वैषम्यं दुर्विवेचमिति चेत् । अत्र केचित् । धर्मा हि द्विविधा विशेष्यस्वरूपनिष्ठा विशिष्टस्वरूपनिष्ठाश्च । ये विशेष्यस्वरूपनिष्ठा आनन्दादयस्ते सर्वानुयायिन इतरे तु व्यवस्थिताः । जगत्कारणत्वस्य प्रकृतिपुरुषकालविशिष्टलक्षणतया तदुपयुक्तसार्वज्ञ्यादेरपि तथात्वान्न सर्वानुयायित्वम् । अयंभावः । केचिद्धर्माः स्वरूपप्रयुक्ताः सततैकरूपा निर्विकाराः । अत एव—

यच्च कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।

इत्यादिभिरुपपादिताः परमार्थशब्दवाच्यभावाः सर्वज्ञत्वसर्वनियन्तृ-

त्वादिविलक्षणास्ते सर्वविद्यानुयायिनः । संयद्वामत्वसर्वज्ञत्वादयस्तु धर्माः स्वरूपव्यतिरिक्ताः सततैकरूपत्वशून्यप्रकृतितत्कार्यजीवकालेश्वरधर्मभूतज्ञानघटिता न ते एकरूपाः । ईश्वरधर्मभूतज्ञानस्यापि नानाविविधसंकल्पादिलक्षणविकारशालितयैश्वर्यतत्क्रियाणामप्यनेकरूपत्वाभिन्नधर्माः । अत एव परैरप्यानन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मास्ते चापृथक्त्वात्तत्तद्घटितधर्माणामपि नैकरूपत्वमत एव न परमार्थशाब्दितत्वं च । अतस्तेषां न सर्वानुयायित्वम् । ज्ञानत्वानन्तत्वसत्यत्वादीनां तु न तथेति वैषम्यमाहुः । अन्ये तु स्वरूपप्रतीत्यन्तर्गता धर्माः सर्वविद्यानुयायिनः । स्वरूपप्रतीत्यन्तर्गतत्वं स्वरूपान्तर्गतत्वमेव । ज्ञानत्वानन्दत्वादयस्तु स्वरूपाभिन्नधर्माः । अत एव परैरप्यानन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मास्ते चापृथक्त्वेऽपि पृथगिवाऽऽमासन्त इत्युक्तम् । ततश्च ये स्वरूपाभिन्नधर्मास्ते सर्वविद्यानुयायिनः । सर्वज्ञत्वसर्गकर्तृत्वादयस्तु धर्मभूतज्ञानक्रियादिरूपा धर्मिस्वरूपभिन्ना इति न सर्वानुयायिनः । अपरे तु स्वरूपोपदेशपरवाक्यप्रतिपन्नानां सर्वविद्यानुयायित्वं नोपासनोपदिष्टानाम् । न च यः सर्वज्ञः सर्वविदित्यादिषु स्वरूपोपदेशवाक्यप्रतिपन्नतया सार्वज्ञ्यादीनामपि सर्वविद्यानुयायित्वप्रसङ्ग इतिवाच्यम् । तस्याप्युपासनविध्यश्रवणेऽपि तत्परत्वात् । 'अत एव संभृतिद्युव्याप्त्यपि चातः [ ब्र०सू० ३ । ३ । २३ ] इत्यधिकरणेऽनारभ्य श्रुतानामश्रुतोपासनविधीनामप्युपासनार्थत्वं सिद्धवत्कृत्यैव किं सर्वविद्यानिवेश उतात्पायतनव्यतिरि[क्त]स्त्विति चिन्ता प्रवर्तिता । न चैवमुपासनार्थत्वे सार्वज्ञ्यादीनामपारमार्थ्यप्रसङ्ग इति वाच्यम् । बाधकाभावेन सत्यत्वात् । अत एव ध्यानार्थेऽपि गुणोपदेशे तद्गुणक ईश्वरः सिध्यतीति व्यतिहारसूत्रे शंकरभाष्येऽप्युक्तम् । इतरथा परमते सत्यकामत्वादीनां वागादिपादत्वादिवद्व्यावहारिकसत्यत्वस्याप्यभावप्रसङ्गादित्याहुः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्यायप्रकाशिकायां नवमोऽनुवाकः ॥ ९ ॥

---

इति ब्रह्मवल्ल्यध्यायः समाप्तः ।

---

अथ लक्षणान्तरमुखेन (ण) ब्रह्म प्रतिपादयितुं ब्रह्मप्रतिपत्तौ तपोनिहृतकल्मषान्तःकरणस्य हेतुत्वमिति प्रतिपादनाय च भृगुवल्ल्यारभ्यते—

भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति।

वरुणसुतो भृगुः पितरं वरुणमधीहि भगवो ब्रह्मेतिमन्त्रपूर्वकमुपसन्न इत्यर्थः। हे भगवन्पूजार्ह ब्रह्माधीहि उपदेशाय स्मराधीष्वेति वाऽध्यापयेति वाऽर्थः।

तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति तꣳ होवाच।

अन्नं ब्रह्म प्राणो ब्रह्मेत्यादिकं तन्मनःशोधनायोपदिश्य किं सर्वाण्यपि ब्रह्माणि उतैकं तत्रापि किं वा ब्रह्मेति व्याकुलचेतसं पुत्रमालोक्य वक्ष्यमाणमुवाचेत्यर्थः।

यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति।

जीवन्ति आत्मभूतेन जीवन्तीत्यर्थः। यत्प्रयन्ति सन्ति भूतानि यदभिसंविशन्ति लीयमानानि सन्ति यदभिसंविशन्ति लीयन्ते। समित्येकीकरणे। एकीकृततया प्रवेशः संवेशः। यद्वा यन्तीति मोक्षः। अभिसंविशन्तीति प्रलयः। अस्मिन्पक्षे यच्छब्दस्याऽऽवृत्तिः। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति' [तै० ३।१] इत्यत्र प्रतिवाक्यं तद्ब्रह्मेत्यनुक्तेर्न जगज्जन्मादि प्रत्येकं लक्षणम्। प्रत्येकलक्षणत्वे लक्षणान्तरवैयर्थ्यप्रसङ्गाच्च। अतः समुदितमेव लक्षणम्। न च जन्मादिसमुदायस्य लक्षणत्वे व्यावृत्त्यभावेन निष्प्रयोजनत्वम्। लक्ष्याकारविपरीतशङ्कानिवारणपरत्वेन सप्रयोजनत्वात्। उत्पत्तिकारक(ण)त्वमात्रेऽभिहिते हि तस्य स्थितिप्रलयकारणभूतवस्त्वन्तरशङ्कया जगज्जन्ममात्रकारणस्य ब्रह्मणो निरतिशयबृहत्त्वं न सिध्येत्। तथा लयकार[ण]त्वानभिधान आत्यन्तिकलयरूपमोक्षप्रदान्तरसद्भा-

वशङ्कया मोक्षप्रदत्वप्राप्यत्वानुगुणगणैर्बृहत्त्वं न सिध्येत् । अतो जगज्जन्मादिकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिकारणसमुदायस्यैव बृहत्त्वातिशयौपयिकत्वात्सृष्टिस्थितिप्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम् । यतो येन यदिति यद्वृत्तयोगात्कारणमनूद्यते तद्ब्रह्मेति कारणस्य ब्रह्मत्वं विधीयते तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति 'तद्विजिज्ञासस्व' इति न विचारस्योपासनस्य वा विधिः । विचारात्मकज्ञानं रागप्राप्तत्वान्न विधेयम् । उपासनात्मकस्य तु ज्ञानस्य 'ब्रह्मविदाप्नोति' [तै० २।१] इति प्राकारणिकवाक्यान्तरसिद्धत्वात् । उपक्रमे 'अधीहि भगवो ब्रह्म' [तै०३।१] इति प्रश्नस्योतत्त्वपरत्वेनोपायविषयत्वाभावाच्च नोपासनाज्ञानमिह विधेयम् । अतो 'विजिज्ञासस्व' इत्युपदिश्यमानेऽर्थे सावधानत्वार्थं संदेहनिवृत्त्यर्थं चोक्तम् । या गन्धवती तां पृथिवीं विद्धीतिवत् । अतः कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम् । यथा यत्र सारसः स देवदत्त केदार इत्युक्ते सारससंबन्धस्य देवदत्तकेदारलक्षणत्वमेवोक्तं स्यात्तद्वदिति व्यासार्यैरुक्तम् । नन्वीश्वरस्य लिलक्षयिषितत्वे तर्हि तदसाधारणसर्वज्ञत्वादिप्रतिपादकसत्यज्ञानादिवाक्यानादरेण जन्मादिकारणत्वेन किमर्थं लक्ष्यत इति चेदुच्यते । गुणैः स्वरूपस्य लक्ष्यत्वे तदपेक्षया बहिष्ठाया विभूतेरुपास्यान्तर्भावो न प्रतीयेत सर्गादिविषयभूतया तु विभूत्या स्वरूपे लक्ष्यमाणे विभूतेः सर्गाद्यौपयिकसर्वज्ञत्वादिगुणानामपि जिज्ञास्यान्तर्भावः सिध्यति विभूतेश्च जिज्ञास्यान्तर्भाव उपासात्रैविध्यादिति सूत्रितः । नन्वेवमपि कृत्स्नविभूतेर्जिज्ञास्यान्तर्भावो न सिध्यति त्रिपाद्विभूतेर्जन्माद्यस्पृष्टत्वादिति चेन्न । प्रयन्तीति प्रलयवाक्यस्थ यच्छब्देन मुक्तप्राप्यस्य ब्रह्मणो विवक्षितत्वान्नित्य[वि]भूतिविशिष्टस्यैव मुक्तस्य प्राप्यत्वान्नित्यविभूतेरपि जिज्ञास्यत्वसिद्धिः । एवं च जगत्कारणत्वलक्षणं विशिष्टनिष्ठं सत्यज्ञानत्वलक्षणं तु विशेष्यनिष्ठमिति भिदा । एवमेव व्यासार्यैरुक्तम् । अत्र यत इति पञ्चमी हेत्वर्थिका यच्छब्दस्यानुवादरूपत्वात् । अनुवादस्य च प्रापकवाक्यसापेक्षतया त[द्विरुद्धा]र्थपरत्वासंभवात् । प्रापकवाक्येषु 'एकमेवाद्वितीयं' [छा०६।२।१] 'तदैक्षत' 'बहु स्यां तत्तेजोऽसृजत' इति निमित्तत्वोपादानत्वयोः प्रतिपादनात्तदनुवादिलक्षणवाक्ये यत इति पदमुभयविषयकमिति व्यासार्यै-

रुक्तम् । न च हेतौ पञ्चमी नानुशिष्टेति शङ्क्यम् । अइउणिति सूत्रे विवारभेदादिति भाष्यनिर्देशेन 'विभाषागुणेऽस्त्रियाम्' [ पा०सू० २।३। २५ ] इत्यत्र विभाषेति योगविभागस्याऽऽश्रिततया ततो हेतुपञ्चम्युपपत्तेरिति द्रष्टव्यम्। इदं च चिन्तितम् 'जन्माद्यस्य यतः' [ब्र०सू०१।१।२] इति सूत्रे 'यतो वा इमानि भूतानि जायन्ते' 'येन जातानि जीवन्ति' [ तै०३।२ ] इत्यत्र जगज्जन्मादयो न विशेषत्वेन ब्रह्म लक्षयितुं शक्नुवन्ति विशेषणानां व्यावर्तकस्वभावत्वेन व्यावर्तकबहुत्वे व्यावर्त्यबहुत्वावश्यंभावेन विशेषणानां बहुत्वे विशेष्यनानात्वप्रसङ्गात् । खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र विशेषणबहुत्वेन विशेष्यबहुत्वस्य दर्शनात् । नच देवदत्तः श्यामो युवा समपरिमाण इत्यादौ विशेषणबहुत्वे विशेष्यैक्यं दृष्टमिति वाच्यम् । प्रत्यक्षावगतविशेष्यैक्यबलात्तत्र विशेष्यभेदत्यागेऽपि प्रत्यक्षाद्यप्रतिपन्नेऽलौकिके ब्रह्मण्युत्सर्गप्राप्तस्य विशेषणभेदप्रयुक्तविशेष्यभेदस्य त्यागायोगात् । नाप्युपलक्षणतया जन्मादीनां व्यावर्तकत्वम् । यत्रायं सारसः स देवदत्तकेदार इत्यादौ केदारत्वादिना केनचिदाकारेण पूर्वप्रतिपन्न एव केदारो देवदत्तकेदारत्वरूपधर्मान्तरवत्तया सारसेनोपलक्ष्यते । इह तु जगज्जन्मादिभिर्निरतिशयबृहत्त्वरूपब्रह्मत्व उपलक्षणीय उपलक्ष्याकारसमानाधिकरणकेदारत्वस्थानीयः पूर्वप्रतिपन्नः कश्चनाऽऽकारो वक्तव्यः । न चेह ब्रह्मणि पूर्वप्रतिपन्नाकारः कश्चिदस्ति । न चेह 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २ । १ । १ ] इति वाक्ये प्रतिपन्नसत्यत्वज्ञानत्वादीनां पूर्वप्रतिपन्नाकारत्वस्य संभवः सत्यत्वादिष्वपि विशेषणत्वोपलक्षणत्वविकल्पदौःस्थ्येन तेषामपि लक्षणत्वासंभवादिति प्राप्त उच्यते- 'जन्माद्यस्य यतः' [ ब्र० सू० १ । १ । २ ] अस्याचिन्त्यविविधचित्ररचनस्य ब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रितस्य जगतो जन्मस्थितिलया यतो भवन्ति तद्ब्रह्मेति सूत्रार्थः। ततश्च जगज्जन्मादिहेतुत्वं ब्रह्मलक्षणं भवितुमर्हतीति सूत्रार्थः । अयं भावः— यद्यपि विशेषणानां व्यावर्तकत्वं स्वभावोऽथापि विशेषणं स्वविरुद्धधर्माश्रयात्स्वाश्रयं व्यवच्छिनत्तीत्येव न तु स्वाविरुद्धधर्माश्रयादपि स्वाश्रयं व्यावर्तयति । नीलमुत्पलमित्यादौ नैल्यस्य शौक्ल्याश्रयव्यावर्तकत्ववद्दैर्घ्याश्रयव्यावर्तकत्वाभावात् । प्रकृते च जन्महेतुत्वास्थितिहेतुत्वादीनां परस्परविरुद्धत्वाभावेन व्यक्तिबहुत्वस्याप्रसक्तेः । खण्डो मुण्ड इत्यादौ

खण्डत्वादीनां परस्परविरुद्धत्वात्स्वाश्रयभेदकत्वम् । उपलक्षणपक्षेऽपि न दोषः । उपलक्षणभूताज्जगज्जन्मादिहेतुत्वादुपलक्ष्याच्च निरतिशयबृहत्त्वादन्यस्य बृहत्त्वसामान्यस्य पूर्वप्रति[प]न्नाकारस्य संभवेनोपलक्षणत्वपक्षेऽपि दोषाभावात् । ननु परस्परविरुद्धयोर्विशेषणत्वोपलक्षणत्वपक्षयोरपि भाष्ये कथमभ्युपगम इति चेत् । अत्र केचित्—विशिष्टनिष्ठं जगत्कारणत्वं विशेष्यनिष्ठं तु सत्यत्वादिकमिति व्यासार्यैस्तत्र तत्रोक्तम् । भाष्ये च जगत्कारणत्वोपलक्षितस्वरूपस्येति बहुशो व्यवहृतत्वाज्जगत्कारणत्वं चिदचिद्विशिष्टस्य ब्रह्मणः । विशेषणभूतं लक्षणं शुद्धस्वरूपस्य तूपलक्षणं।जगत्कारणत्वस्य शुद्धस्वरूपनिष्ठत्वाभावात् । तदभिप्रायेणैव विशेषणोपलक्षणाभ्युपगमः । न च शुद्धस्वरूपानिष्ठस्य विशिष्टस्य जगत्कारणत्वस्य कथं शुद्धस्वरूपोपलक्षणत्वमिति वाच्यम् । तटस्थस्यापि शाखाग्रस्य चन्द्रोपलक्षकत्वदर्शनादिति वदन्ति । अन्ये तु विशेष्यनिष्ठत्वानिष्ठत्वाभ्यामेव विशेषणोपलक्षणभेदमाश्रित्य जगत्काणत्वस्य ब्रह्मनिष्ठतया विशेषणत्वं प्रपञ्चगतजन्मादेस्तु ब्रह्मनिष्ठत्वाभावेनोपलक्षणमिति वर्णयन्ति । अपरे तु 'यतो वा इमानि' [तै०३।१] इतिवाक्येन जन्मादिविशिष्टे ब्रह्मत्वं बोध्यत उत लक्ष्यते । नाऽऽद्यः । जन्मादिविशिष्टे ब्रह्मत्वबोधने विशेषणभूतजन्मादावपि ब्रह्मत्वप्रसङ्गः । उपलक्षणपक्ष आकारान्तराप्रतिपत्तिर्दोष इति पूर्वपक्षिणो भावः । तन्न । न विधेयान्वयित्वं विशेषणत्वं येन जन्मादिविशेषणत्वे विधेयभूतब्रह्मान्वयोऽपि प्रसज्येत । अपि तु यदन्वितत्तया ज्ञात इतरान्वयधीस्तत्तत्रविशेषणम् । प्रकृते च जगज्जन्मादिहेतुत्वान्वितया ज्ञाते ब्रह्मणि ब्रह्मत्वान्वयधीरिति विशेषणत्वे नानुपपत्तिः । यदि विधेयान्वय्येव विशेषणमित्याग्रहस्तर्ह्युपलक्षणपक्षो वाऽस्तु बृहत्त्वसामान्यलक्षणतृतीयाकारप्रतिपत्तेः संभवादित्येव सिद्धान्तिनोऽभिप्रायः । न तु विशेषणत्वोपलक्षणत्वयोः समुच्चयः । इतरे तु तद्विजिज्ञासस्वेत्यत्रोपासनं विधीयते तत्र केषुचिदुपासनेषु जगत्कारणत्वमनुसंधेयम् । तत्र ज्ञाप्यान्तर्गतत्वाज्जगत्कारणत्वं विशेषणम् । यत्र तु नानुसंधेयं तत्रोपलक्षणं ज्ञाप्यानन्तर्गतत्वादिति'इतरे त्वर्थसामान्यात्'। [ ब्र०सू०३।३।१३ ] इति सूत्रे व्यासार्यै(र्या) स्तदनुसारेण विशेषणत्वोपलक्षणत्वसमुच्चयो नानुपपन्न इति वदन्ति । अतो जगज्जन्मादिहेतुत्वं ब्रह्मलक्षणमिति स्थितम् ।

प्रकृतमनुसरामः—

स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां प्रथमोऽनुवाकः ॥ १ ॥

---

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति ।

शृङ्गग्राहिकयेदं ब्रह्मेत्युपदेशं परित्यज्य लक्षणोपदेशपूर्वकं विजिज्ञासस्वेत्युपदिशतो ह्ययं भावः—संपादनीयं ब्रह्मज्ञानसाधनं संपाद्यैतल्लक्षणलक्षितं ब्रह्म विजानीहीत्येतमर्थं निश्चित्येन्द्रियनिग्रहादिलक्षणस्य तपसो ब्रह्मविद्यायामन्तरङ्गोपायत्वात्तदेव साधनमिति ज्ञात्वा तपः कृत्वा प्रथमतोऽन्नं ब्रह्मेति ज्ञातवानित्यर्थः । अन्नस्य सर्वभूतोत्पत्त्यादिकारणत्वात् । अन्नं ब्रह्मेति ज्ञात्वोत्पत्तिमत्त्वादिनाऽन्नस्य ब्रह्मत्वेऽपरितुष्यन्पुनरपि पितुः समीपमागत्याधीहि भगव इति मन्त्रमुच्चारितवानित्यर्थः ।

तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।

पूर्ववदेव त[पः] समाचर तप एव ब्रह्मविद्यासाधनं तस्मात्तपसा ब्रह्म विजिज्ञासस्वेत्युक्तवानित्यर्थः ।

स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां द्वितीयोऽनुवाकः ॥ २ ॥

---

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां तृतीयोऽनुवाकः ॥ ३ ॥

---

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां चतुर्थोऽनुवाकः ॥ ४ ॥

---

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां पञ्चमोऽनुवाकः ॥ ५ ॥

---

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।

स्पष्टोऽर्थः ।

सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता ।

भृगुणा वरुणात्प्राप्ता विद्याऽन्नमयादिकमतिक्रम्याक्षरे परमे व्योमन्निति निर्दिष्टे परमव्योमशब्दिते परमात्मनि प्रतिष्ठिता न तमतिक्रम्य ततोऽन्यत्र गतेत्यर्थः ।

तद्वेदनस्य फलमाह—

य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

स्पष्टोऽर्थः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां षष्ठोऽनुवाकः ॥ ६ ॥

---

एतद्विद्याङ्गं व्रतमाह—

अन्नं न निन्द्यात् । तद्व्रतम् ।

प्राणशरीरयोरप्तेजसोः पृथिव्याकाशयोरन्नान्नादत्वदृष्टिं तयोः परस्परप्रतिष्ठितत्वदृष्टिं परस्परप्रतिष्ठिततया परम्परया स्वप्रतिष्ठितत्वदृष्टिं तदङ्गव्रतविशेषं तत्फलं चाऽऽह—

प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतिष्ठितं[1] वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रकाशिकायां सप्तमोऽनुवाकः ॥ ७ ॥

---

अन्नं न परिचक्षीत । तद्व्रतम् ।

न परिचक्षीत पात्रस्थमन्नं न निराकुर्यादित्यर्थः ।

आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं

---

१ इदं द्विरुक्तिरानन्दाश्रमस्थमुद्रितपुस्तके नास्ति ।

वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महा-
न्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रका-
शिकायामष्टमोऽनुवाकः ॥ ८ ॥

---

अन्नं बहु कुर्वीत ।

अतिथ्यभ्यागतस्वजनपर्याप्तं कुर्यात् । यद्वा । बहु कुर्वीत बहु मन्वी-
तेत्यर्थः । अन्ने बहुमतिं कुर्यादित्यर्थः ।

तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽ-
न्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे
पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् ।
स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतिष्ठितं वेद
प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भ-
वति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये
नवमोऽनुवाकः ॥ ९ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्यायप्रका-
शिकायां नवमोऽनुवाकः ॥ ९ ॥

---

न कंचन वसतौ प्रत्याचक्षीत । तद्व्रतम् ।

स्वगृहे रात्र्यादौ[१ वसत्यर्थं ]भोजनार्थमागतं कमपि नरं न निरा-
कुर्यादित्यर्थः ।

---

१ आनन्दाश्रमस्थमुद्रितपुस्तके द्विरङ्कितं दृश्यते ।

तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्।

भोजनार्थमागतानां पुरुषाणा[म]प्रत्याख्यानस्याऽऽवश्यकत्वान्निषिद्धेनापि येन केन मार्गेण बह्वन्नं संपादयेदित्यर्थः।

अराध्यस्मा अन्नमित्याचक्षते।

अस्मा उपासकायान्नमराधि सिद्धम्। उपासकार्थमेव ह्यन्नस्य निष्पत्तिः। अतस्तदर्थमेव निष्पन्नत्वादन्नानां तेषां येन केनाप्युपायेनार्जने न दोष इति भावः।

एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते।

एतद्वै मध्यतो राद्धं सर्वावयवयुक्तमप्यन्नमस्मा उपासकाय सिद्धम्। तदर्थमेवोत्पन्नमिति हि सन्त आचक्षत इत्यर्थः।

य एवं वेद।

स यया कया च विधया बह्वन्नं प्राप्नुयादिति पूर्वेण संबन्धः।

क्षेम इति वाचि।

क्षेमसाधनत्वाद्वाचः क्षेमत्वबुद्धिस्तत्र कार्येत्यर्थः। एवमुत्तरत्रापि।

योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः। विमुक्तिरिति पायौ।

विमुक्तिर्विसर्ग इत्यर्थः।

इति मानुषीः समाज्ञाः।

अध्यात्ममेता उपासना उक्ता इत्यर्थः।

अथ दैवीः।

उपासना आचक्षत इत्यर्थः।

तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु ।
ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे ।

एतत्त आध्यात्मिकोपासने संगतम् । पाठक्रमादर्थक्रमस्य बलवत्त्वादिति द्रष्टव्यम् ।

सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान्भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति ।

आकाशस्य प्रतिष्ठितत्वादिगुणयुक्ततयोपासने तत्क्रतुन्यायेन प्रतिष्ठादिकं भवतीत्यर्थः । ब्रह्मवान्ब्रह्मत्ववानित्यर्थः । नम्यन्ते प्राप्यन्त इत्यर्थः ।

तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं
म्रियन्ते द्विषन्तः सपत्नाः ।

परितो म्रियन्तेऽस्मिन्निति परिमरः । सार्वत्रिकमरणस्याप्यवकाशतयाऽऽश्रय इत्यर्थः । एवमाकाशस्य ब्रह्मशेषत्वेन परिमरत्वेनोपासन एनमुपासकं परितो द्विषन्तो म्रियन्त इत्यर्थः । पर्येणमिति णत्वं छान्दसम् ।

तदेतद्व्याचष्टे—

परि येऽप्रिया भ्रातृव्याः ।

अप्रिया भ्रातृव्याः शत्रवः परितो वर्तमाना म्रियन्त इत्यर्थः ।

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य ।

पूर्ववदर्थः ।

इमाँल्लोकान्कामान्नी कामरूप्यनु-
संचरन्। एतत्साम गायन्नास्ते।

एतद्वक्ष्यमाणमित्यर्थः।

हा३वुहा३वुहा३वु।

स्तोभाक्षराण्येतानि।

अहमन्नमहमन्नमहमन्नम्। अहम-
न्नादोऽ३हमन्नादोऽ३हमन्नाद।

अत्राहंशब्दः परमात्मपर्यन्तः। भोक्तृभोग्यवाच्यन्नान्नादशब्दावपि तत्पर्यन्तौ।

अहꣳश्लोककृदहꣳश्लोककृदहꣳश्लोककृत्।

श्लोक्यत इति श्लोकः श्लाघनीयजगद्रक्षणादिकृदित्यर्थः।

अहमस्मि प्रथमजा ऋता ३ स्य।

ऋतस्य कर्मणः प्रथमजाः सर्गाद्यसमये तत्परिपाककृदित्यर्थः।

पूर्वं देवेभ्यो अमृतस्य ना ३ भायि।

देवेभ्यः पूर्वं वर्तमानोऽमृतस्य मोक्षस्य नाभी रथचक्रस्य नाभिरिवाऽऽश्रयभूतः। नाभा इति गानकृतो विकारः।

यो मा ददाति स इदेव मा ३ऽवाः॥ ५॥

यो मां योग्याय शिष्याय ददात्युपदिशति स इदेव माऽवा अवाः प्राप्तो भवति। वा गतिगन्धनयोरिति धातुः, इच्छब्दोऽनर्थकः।

अहमन्नमन्नमदन्तमा३द्मि।

अन्नशब्दितमचेतनं तद्भोक्तारं चेतनं चाद्मि व्याप्नोमि।

अहं विश्वं भुवनमभ्यभवा३म्।

प्रलयकाले विश्वमभिभूतवानस्मीत्यर्थः।

सुवर्न ज्योतीः।

कमनीयदेदीप्यमानशरीरो भवति।

य एवं वेद । इत्युपनिषत् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याये
दशमोऽनुवाकः ॥ १० ॥

समाप्तेति शेषः ॥ ३ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यध्याय-
प्रकाशिकायां दशमोऽनुवाकः ॥ १० ॥

---

इति भृगुवल्ल्यध्यायः समाप्तः ।

---

५८ आचारेन्दुः—माटे इत्युपाह्वत्र्यम्बकविरचितः। .... ... ४
५९ श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचितः। .... ... २
६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः। ... .... १
६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम्। .... ... २
६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः—सटीकाः.... २
६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता। .... ३
६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता। .... ३
६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम्। ... .... १
६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसंहितः। .... .... .... ६
६७ ब्रह्मसूत्राणि—दीपिकासमेतानि। ... ... ... ... ४
६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता। ... .... .... १
६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम्। तन्त्रशास्त्रग्रन्थः। ... .... १
७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः। .... .... .... १
७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता।.... .... १०
७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः। ... .... २
७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता।.... ... १
७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता। .... .... १
७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता। ... .... ४
७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः। .... १
७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता।.... .... २
७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः। .... .... ३
७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता। ... ... २
८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका। ... .... ०
८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम्। ... .... ४
८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता।... .... .... .... २
८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम्। ... .... ९
८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः। .... २
८५ ज्योतिर्निबन्धः—शूरमहाराष्ट्रश्रीशिवराजविरचितः। .... ....
८६ विधानमाला—श्रीनृसिंहभट्टविरचित। .... ...
८७ अग्निहोत्रचन्द्रिका—श्रीवामनशास्त्रिभिः कृता। ... ...
८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम्। भागद्वयात्मकम्। ....
८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः। .... .... ... २

| | | |
|---|---|---|
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । .... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । .... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—श्रीवामनशास्त्रिकृतः प्रथमो भागः । ... | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । .... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... .... .... | ३ | ६ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । .... .... ... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागत्रयात्मकम् । | १३ | ६ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... | ० | ९ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । .... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागोजीभट्टविरचितः । ... .... | १ | १० |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । ... | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । .... | १ | ४ |
| आधानपद्धतिः—श्रीवामनशास्त्रिभिः कृता । ... ... ... | १ | १४ |
| पश्वालम्भमीमांसा—श्रीवामनशास्त्रिविरचिता । .... .... | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । .... ... .... | १ | ५ |

## विषयानुसारेण ग्रन्थानां सूचीपत्रम् ।

| विषयः | ग्रन्थाङ्काः |
|---|---|
| २ अलंकारः | ६६, ८९, |
| ९ धर्मशास्त्रम् | ५५, ५७, ५८, ६०, ६१, ७८, ८६, ९८, १०० |
| ९ पुराणम् | १८, २५, २८, ४१, ४९, ५२, ५४, ६८, पद्मपुराणम् । |
| ८ वेदान्तः | ५, १७, ३०, ३१, ३२, ३४ [illegible] |
| ११ श्रुतिः | १–३, २२, ३६–३८, ४२, ६५, ८८, ९० । |
| ६ वैद्यकम् | ४, १०, २६, २७, ३३, ७१ । |
| २ व्याकरणम् | ४३, ७२, |
| ६ श्रौतम् | ५३, ७४, ८१, ८७, ९३, आधानपद्धतिः । |
| १४ संकीर्णम् | २२, २४, ३५, ४७, ५६, ६९ [illegible], ९१, |